# साहित्य-लहरी

रचयिता

प्रो० सुरजनदास स्वामी, एम० ए०,

व्याकरण, साहित्य, वेदान्त, सांख्ययोगाचार्य

तथा

पं० लक्ष्मीनारायण शर्मा, एम० ए०

प्रकाशक

पी० सी० द्वादशश्रेणी एण्ड कम्पनी, लिमिटेड,

अलीगढ़ ।

# साहित्य-लहरी


रचयिता

प्रो० सुरजनदास स्वामी, एम० ए०,

व्याकरण, साहित्य, वेदान्त, सांख्ययोगाचार्य

तथा

पं० लक्ष्मीनारायण शर्मा, एम० ए०





प्रकाशक

पी० सी० द्वादशश्रेणी एण्ड कम्पनी, लिमिटेड,

अलीगढ़ ।

# प्राक्कथन

यह पुस्तक शिक्षा-विभाग द्वारा निश्चित संस्कृत पाठ्य-क्रम के अनुसार मैट्रिक कक्षा के लिए प्रस्तुत की गई है। इसमें संस्कृत भाषा के अगाध ज्ञान-भण्डार में से छात्रों के उपयोगी विषयों का समावेश किया गया है। इससे भारतीय संस्कृति का सच्चा स्वरूप विद्यार्थियों को सहज में ही हृदयङ्गम हो सकता है। बड़े-बड़े विद्यादिग्गज विद्वानों और काव्य-विशारदों के समस्त जीवन का परिश्रम जो अनेक संस्कृत ग्रन्थों—साहित्यिक, सामाजिक और राजनीतिक तथा धार्मिक विषयों के सम्बन्ध मे प्राप्त है, उसका सारांश इसमें ओत-प्रोत है।

आशा है अध्यापकगण और विद्यार्थीवर्ग इससे उपयुक्त लाभ उठा, भारत की सर्वोच्च सर्वाग्रज अनुपम भाषा के महत्त्व-प्रसार की ओर अग्रसर होंगे।

—लेखक

# अनुक्रमणिका

❀ श्रीः ❀

## प्रथमः पाठः

# ईश-स्तुतिः

[ भारतीय संस्कृति अध्यात्म प्रधान है। आस्तिक्य बुद्धि भारतीयता का मूल है, अतएव इस देश में प्रत्येक कार्य ईश्वर की प्रार्थना से प्रारम्भ होता है। ]

त्वमेव माता च पिता त्वमेव,
त्वमेव बन्धुश्च सखा त्वमेव।
त्वमेव विद्या द्रविणं त्वमेव,
त्वमेव सर्वं मम देव-देव ॥ १ ॥

❀ ❀ ❀

ध्येयं वदन्ति शिवमेव हि केचिदन्ये,
शक्तिं गणेशमपरे तु दिवाकरं वै।
रूपैस्तु तैरपि विभासि यतस्त्वमेव,
तस्मात् त्वमेव शरणं मम दीनबन्धो ॥ २ ॥

❀ ❀ ❀

नो सोदरो न जनको जननी न जाया,
नैवात्मजो न च कुलं विपुलं बलं वा।
संदृश्यते न किल कोऽपि सहायको मे,
तस्मात् त्वमेव शरणं मम दीनबन्धो ॥ ३ ॥

दुर्वासना मम सदा परिकर्षयन्ति,
चित्तं, शरीरमपि रोगगणा दहन्ति।
सञ्जीवनं च परहस्तगतं सदैव,
तस्मात् त्वमेव शरणं मम दीनबन्धो ॥ ४

## अभ्यासार्थ प्रश्न

१. नीचे लिखे शब्दों का अर्थ बतलाओ.—

द्रविणम्, सोदरः, दुर्वासना, परिकर्षयन्ति, दिवाकरः।

२. निम्नलिखित पदों में संधि-विच्छेद करोः—

बन्धुश्च, कोऽपि, नैव, रूपैस्तु।

३. तीसरे, चौथे पद्य का भाव अपने शब्दों में लिखिए।

## द्वितीयः पाठः

# आश्रमवर्णनम्

[ भारतीय संस्कृति के आश्रयभूत आश्रम का अति संक्षेप में यहाँ चित्रण किया गया है । ]

अहो ! रमणीयोऽयं आश्रमः । अयं सर्वतः फलविनम्रैः पादपैः उपशोभितः । अत्र मुनयः निरन्तरं आत्मचिन्तनं कुर्वन्ति । अस्मिन् आश्रमे क्वचित् अतिथीनां परिचर्या, क्वचित् धर्मशास्त्राणां आलोचनम्, क्वचित् विविध पुस्तकानां वाचनम्, क्वचित् पर्ण-शालानां निर्माणम्, क्वचिद् अजिराणां लेपनम्, क्वचित् योगस्याभ्यासः दृष्टिपथमायाति । अत्राश्रमे केचित् मुनयः वल्कलानि क्षालयन्ति । केचित् समिधः संचिन्वन्ति । केचिद् अक्षमालां ग्रथ्नन्ति । केचित् परिव्राजकान् सत्कुर्वन्ति । केचित् कमण्डलून् जलेन पूरयन्ति । केचित् च वल्कल वसनानि परिदधति ।

नात्र कश्चिदपि जनः कलहं करोति । नासत्यं वदति । न कपटमाचरति । न क्रोधं तनुते । न वा गर्वमाचरति ।

अत्र हि बटुजना वेदमभ्यसन्ति । शुका वषट्कारमुच्चार-यन्ति सारिका ओ३म् इति मन्त्र तारस्वरेण वदन्ति

मुनीनां स्नानाय अत्र दीर्घिकाः, सरांसि च सन्ति। भोजनार्थं वृक्षाणां फलानि विविधानि कन्दमूलानि च विद्यन्ते। परिधानार्थं च वल्कलानि अजिनानि च वर्तन्ते। पशुपक्षिणोपि अत्र शाश्वतिकं विरोधमपहाय शान्त्या प्रेम्णा च निवसन्ति।

## अभ्यासार्थ प्रश्न

१. इस पाठ का सार अपने शब्दों में लिखो।

२. निम्नलिखित शब्दों का अर्थ लिखो:—

परिचर्या, आलोचनम्, अजिराणाम्, समिधः, दीर्घिकाः, परिधान, अजिनानि।

३. निम्नलिखित क्रियाओं मे धातु, पुरुष और वचन बतलाओ:—

कुर्वन्ति, अभ्यस्यन्ति, विद्यन्ते, जालयन्ति, ग्रथ्नन्ति।

४. नीचे लिखे शब्दों में विभक्ति और वचन का निर्देश करो:—

दीर्घिकाः, पक्षिणः, शान्त्या, प्रेम्णा।

---

## तृतीयः पाठः

# नृप भोजस्य दानशीलता

[ प्रस्तुत पाठ कवि 'बल्लालसेन' कृत 'भोजप्रबन्ध' से लिया गया है। कवि बल्लालसेन चौदहवी सदी (ईसा) मे हुए हैं। इन्होंने अपने काव्य में ११वी शताब्दी मे होनेवाले दानशील, गुणग्राही एवं संस्कृत के आधार-स्तम्भ उज्जयिनी के राजा भोज का वर्णन किया है। ]

कदाचिद् राजानं निरन्तरं दानतत्परमवलोक्य मुख्यामात्यः साक्षाद् वक्तुमशक्तो राज्ञः शयनभवनभित्तौ श्लोकस्य एकं चरणं लिखितवान्—

"आपदर्थं धनं रक्षेत्।" इति राजा शयनाद् उत्थाय गच्छन् भित्तौ लिखितानि तानि अक्षराणि वाचयित्वा स्वयं द्वितीयं चरणं लिलेख—

"श्रीमतामापदः कुतः?" इति अपरेद्युः अमात्यो द्वितीयं चरणं विलिखितं दृष्ट्वा तत्र तृतीयमेवम् अलिखत्—

"सा चेद् अपगता लक्ष्मीः।" इति परेद्युः राजा पुनस्तद् अवलोक्य चतुर्थं चरणं इत्थं लिखितवान्—

"संचितार्थो विनश्यति।" इति

तद् दृष्ट्वा मुख्यामात्यो राज्ञः पादयोः पपात उवाच च 'देव! क्षन्तव्योऽयं ममापराधः'

## अभ्यासार्थ प्रश्न

१. पाठ का सार अपने शब्दों में लिखिए।

२. निम्नलिखित शब्दों का अर्थ बतलाइए :—

उत्थाय, अपरेद्यु., संचितार्थः, जन्तव्य·

३. निम्नलिखित शब्दों का संधि-विच्छेद करो·—

मुख्यामात्यः, जन्तव्योऽयं, सञ्चितार्थः।

४. निम्नलिखित समस्त शब्दों का विग्रह कीजिए ·—

भवनभित्तौ, सञ्चितार्थः, मुख्यामात्यः।

## चतुर्थः पाठः

# विद्या-प्रशंसा

अपूर्वः कोऽपि कोशोऽयं विद्यते तव भारति !
व्ययतो वृद्धिमायाति क्षयमायाति संचयात् ॥ १ ॥

सद्विद्या यदि का चिन्ता वराकोदर-पूरणे ।
शुकोऽप्यशनमाप्नोति राम रामेति च ब्रुवन् ॥ २ ॥

अनेक संशयोच्छेदि परोक्षार्थस्य दर्शकम् ।
सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥ ३ ॥

ज्ञातिभिर्वण्ट्यते नैव चौरेणापि न नीयते ।
दाने नैव क्षयं याति विद्यारत्नं महाधनम् ॥ ४ ॥

न चौरहार्यं न च राजहार्यं न बन्धुभाज्यं न च भारकारि ।
व्यये कृते वर्धत एव नित्यं, विद्याधनं सर्वधन प्रधानम् ॥ ५ ॥

विद्या ददाति विनयं विनयात् याति पात्रताम् ।
पात्रत्वाद् धनमाप्नोति धनाद्धर्मं ततः सुखम् ॥ ६ ॥

## अभ्यासार्थ प्रश्न

१. पाठ का सार अपनी भाषा में लिखिए तथा विद्या-प्रशंसा विषयक अन्य श्लोक भी बोलिए ।

२. निम्न पदों का संधि-विच्छेद करिये तथा संधि के नियम निर्देशित करिए :—
कोशोऽयं, वराकोऽरपूरयो, रामेति, धनमाप्नोति ।

३. नीचे लिखे पदों में धातु, पुरुष तथा वचन का निर्देश करिए :—
आप्नोति, ददाति, विद्यते, वर्धते, नीयते ।

४. निम्न शब्दों का अर्थ लिखो :—
वराक, ज्ञातिभिः, वञ्चयेत, चौरहार्यम् ।

---

## पञ्चमः पाठः

# प्रभातवेला

[ यहाँ संक्षेप में प्रभातकाल का वर्णन किया गया है जिसमें प्रकृति देवी प्रफुल्लित हो उठती है और स्थावर-जंगम सभी में नव-जीवन का संचार कर देती है। ]

अहो ! रम्या इयं प्रभातवेला। इदानीं शिशिरः सुरभिश्च समीरो मन्दं-मन्दं प्रवहति, मनांसि च मोदयति। अस्मिन् समये पक्षिणः कलं कूजन्ति। कोकिला गायन्ति, मयूरा नृत्यन्ति। उपवनेषु विकसितानि नानारूपाणि कुसुमानि दर्शकानां नयने हरन्ति। सुरभिः पवनश्च घ्राणं तर्पयति। कुसुमरसपानेन मत्ता मधुकरा मधुरं गुञ्जन्ति। लताः पादपाश्च पवनेन चालिता आनन्देन नृत्यन्ति इव। मन्ये सर्वा प्रकृतिरेव आनन्दिता नृत्य-तीव साम्प्रतम्।

भगवान् भास्करः पूर्वस्यां दिशि सकलं जगद् भासयन् उदेति। प्रकाशाद् भीतश्चौर इव तमो विलीयते। जना उत्थाय स्नातुं नदीं प्रयान्ति। तत्र स्नात्वा केचिन् हरिमर्चयन्ति। केचिद् गायत्रीं जपन्ति। केचिद् उच्चैः स्तोत्राणि पठन्ति। केचिन् सन्ध्यामुपासते। कश्चित् प्रणवं जपति। कश्चिन् देवान् यजति। कश्चित्पितॄंस्तर्पयति, कश्चिद् भूतेभ्यो बलिं ददाति।

मन्दिरेषु भगवतः पूजा प्रवृत्ता। अतः भगवतः पूजार्थं बहवो मनुष्या मन्दिरेषु प्रयान्ति। तत्र गत्वा कश्चिद् भगवते पुष्पाण्यर्पयति, कश्चित् फलानि, कश्चित् जलं, कश्चित् फलं, कश्चित् धूपं, कश्चिद् दीपम्, कश्चित् नैवेद्यम्। कश्चिच्च भक्त्या दर्शनमेव करोति।

कृषकाः हलमादाय क्षेत्रं गच्छन्ति। इदमेव तेषां यज्ञभूमिः। विद्यार्थिनः पठनाय विद्यालयेषु प्रयान्ति। वणिजः स्वापणान् उद्घाटयन्ति, राजकर्मचारिणः कार्यालयान् द्रुत गत्या प्रयान्ति।

एवं सर्व एव प्रसन्नमानसाः स्वे-स्वे कर्मणि उत्साहेन प्रवृत्ताश्च दृश्यन्ते सम्प्रति।

## अभ्यासार्थ प्रश्न

१. प्रभातकाल में प्रकृति का संक्षिप्त वर्णन अपने शब्दों में करो।

२. निम्न क्रिया-पदों में धातु, पुरुष और वचन बताओ —
   गायन्ति, गुञ्जन्ति, नृत्यन्ति, हरन्ति, उदेति, उपासते।

३. विग्रह सहित समास लिखिये—
   प्रभातवेला, कुसुमरसपानेन।

४. मन्दिरों में मनुष्य भगवान् को क्या भेंट करते हैं ?

# षष्ठः पाठः

## रामस्य लोकाराधनम्

[ प्रस्तुत पाठ संस्कृत के प्रसिद्ध नाटककार, करुण-रस के आचार्य भवभूति के प्रसिद्ध नाटक 'उत्तररामचरित' से लिया गया है। भवभूति का समय ७वीं शताब्दी है। इन्होंने 'मालतीमाधव', 'महावीरचरित' और 'उत्तररामचरित' तीन नाटक लिखे हैं। ]

( प्रविश्य ) प्रतीहारी—देव ! आसन्नपरिचारको दुर्मुखः प्राप्तः।

रामः—( स्वगतम् ) अन्तःपुरचारी दुर्मुखः। स मया पौरजानपदेषु प्रेषितः ( प्रकाशम् ) आगच्छतु।

( प्रतीहारी निष्क्रान्ता )

( प्रविश्य ) दुर्मुखः—( स्वगतम् ) हा ! कथमिदानीं देवीं सीताम् अन्तरेण ईदृशं जनापवादं देवाय कथयिष्यामि। अथवा कर्त्तव्यः खलु ईदृशो मे मन्दभाग्यस्य।

( उपसृत्य ) जयतु देवः।

रामः—ब्रूहि यदुपलब्धम्।

दुर्मुखः—उपस्तुवन्ति देवं पौरजानपदा विस्मारिता वयं महाराजं दशरथं रामभद्रेण इति।

रामः—अर्थवाद एषः। दोष तु मे कञ्चित् कथय येन स प्रतिविधीयेत।

दुर्मुखः—(सास्रम्) शृणोतु देवः! एवमिव। (इति सीताजनापवादं कथयति।)

रामः—अहह, तीव्रोऽयं वाग्वज्रः (इति मूर्च्छति)।

दुर्मुखः—आश्वसितु देवः।

रामः—(आश्वस्य) तत् किमत्र मन्दभाग्यः करोमि। (विमृश्य सकरुणम्)

अथवा किमन्यत्—

सतां केनापि कार्येण लोकस्याराधनं व्रतम्।
यत्पूरितं हि तातेन मां च प्राणान् च मुञ्चता॥ १॥

हा देवयजनसम्भवे देवि सीते, कथं एवंविधायास्तव अयमीदृशः परिणामः—

त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः।
नाथवन्तस् त्वया लोकास् त्वमनाथा विपत्स्यते॥ २॥

(दुर्मुखं प्रति) दुर्मुख! ब्रूहि लक्ष्मणम्। एष ते नूतनो राजा रामः समाज्ञापयति। (कर्णे) एवमेवम्।

दुर्मुखः—हा! कथमिदानीम् अग्निपरिशुद्धायै गर्भस्थितिपवित्रसन्तानायै देव्यै दुर्जनवचनाद् एवं संकल्पितं देवेन।

रामः—शान्तम। कथं दुर्जनाः पौरजानपदाः? तद्गच्छ।

दुर्मुखः—हा देवि! (इति निष्क्रान्तः)

मः—हा कष्टम् ! अतिनृशंसकर्मा नृशंसोऽस्मि संवृतः, अथवा अस्मत्कुलव्रतमिदम्। सत्यसंकल्पितं ममैतत्—

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।
आराधनाय लोकानां मुञ्चतो नास्ति मे व्यथा ॥ ३ ॥

( इति चिन्तयन् तिष्ठति )

## अभ्यासार्थ प्रश्न

१. इस पाठ से राम के चरित्र पर क्या प्रकाश पड़ता है ? लिखिए।

२ 'स्वगतम्' और 'प्रकाशम्' का प्रयोग नाटक में क्यों होता है ?

३ राम ने प्रजाजनों की सन्तुष्टि के लिए क्या संकल्प किया ?

४ निम्न समस्त पदों का विग्रह सहित समास लिखिए—

जनापवादम्, मन्दभाग्यः, दुर्जनवचनात्, आसन्नपरित्रारक.।

५. सन्धि विच्छेद करिये तथा नियम भी निर्देशित करिये—

वाग्वज्रः, त्वय्यपुण्याः, जनोक्तयः, नृशंसोऽस्मि।

६. निम्न शब्दों में शब्द, विभक्ति और वचन बतलाइये —

मुञ्चता, जनोक्तयः, नाथवन्त, जगन्ति।

---

## सप्तमः पाठः

# आचारः परमो धर्मः

[ प्रस्तुत पाठ 'मनुस्मृति' से संकलित किया गया है। मानव धर्मों का विशद वर्णन मनुस्मृति में मिलता है। स्मृतिकारों में मनु सर्वोच्च पद पर आसीन हैं। ]

श्रुतिस्मृत्युदितं सम्यक् निबद्धं स्वेषु कर्मसु ।
धर्ममूलं निषेवेत सदाचारमतन्द्रितः ॥ १ ॥

आचारात् लभते ह्यायुराचारादीप्सिताः प्रजाः ।
आचाराद् धनमक्षय्यम्, आचारो हन्त्यलक्षणम् ॥ २ ॥

आचारः फलते धर्ममाचारः फलते धनम् ।
आचारात् श्रियमाप्नोति आचारो हन्त्यलक्षणम् ॥ ३ ॥

दुराचारो हि पुरुषो लोके भवति निन्दितः ।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥ ४ ॥

सर्वलक्षणहीनोऽपि यः सदाचारवान् नरः ।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति ॥ ५ ॥

आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च ।
तस्मादस्मिन् सदा युक्तो नित्यं स्यादात्मवान् द्विजः ॥ ६ ॥

एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम् ।
सर्वस्य तपसो मूलं आचारं जगृहुः परम् ॥ ७ ॥

# अभ्यासार्थ प्रश्न

१. आचार के लाभों का संक्षेप में वर्णन करो।

२. निम्न शब्दों के अर्थ बताइए :—

अतन्द्रितः, अव्ययम् श्रद्दधानः, अनसूयः।

३. निम्नांकित क्रिया शब्दों मे धातु, पुरुष व वचन का निर्देश करो :—

लभते, हन्ति, जगृहुः।

४. 'आचारो हन्ति अलक्षणम्' का वाच्य परिवर्तन करिए।

अष्टमः पाठः

# भारतवर्षम्

[ सभ्यता एवं संस्कृति की जन्मभूमि भारतवर्ष का यहाँ चित्रण किया गया है और उसके वैभव एवं प्राकृतिक सौन्दर्य पर प्रकाश डाला गया है । ]

अस्माकं देशो भारतवर्षम् । अयं देशोऽतीव रमणीयः प्रियश्च अस्माकम् । प्रकृतिदेवी सर्वतोभावेन इमं सेवते । गंगा, यमुना, कावेरी, गोदावरी प्रभृतयः पुण्यतमाः सरितः अस्यैव चरणौ क्षालयन्ति, यासु अभिषेकेण न केवलं शरीरमेव शुद्ध्यति अपि-त्वन्तरात्मापि । पुष्कर, प्रयाग, हरिद्वार, काशी प्रभृतीनि पाव-नानि तीर्थस्थानानि अत्रैव विलसन्ति, यत्र प्रतिदिनं अनेके यात्रिणो दर्शनार्थं गच्छन्ति । अस्य उत्तरतो दिशि नगाधिराजो हिमालयो विराजते । अयं पर्वतराजः सिद्धानां देवानां च विहारभूमिः ।

मर्यादा पुरुषोत्तमस्य भगवतो रामस्य, जगद्गुरोः श्रीकृष्णस्य च लीलाप्राङ्गणमयमेव । अहिंसा-समुपासकस्य अयमेव भग-वतो बुद्धस्य महावीरस्य च विहारस्थली । शंकर, रामानुज, वल्लभादयः आचार्याः अत्रैव क्रीडां चक्रुः । स्वामिनो दयानन्दस्य महात्मनो गान्धिमहोदयस्य च जन्मभूमिः एष एव । सर्वेऽपि ऋतवः पर्यायेण अत्रैव विलसन्ति । ऋतुराजस्य वसन्तस्य लीला नान्यत्र दृश्यते ।

सभ्यतायाः संस्कृतेः चरित्रस्य च मूलमिदमेव भारतम्। अहो! रमणीयता अस्य देशस्य। देवा अप्यत्र जन्मग्रहीतुमुत्सकाः किमुत मानवाः। सत्यमभिहितं भगवता मनुना—

एतद्देश प्रसूतस्य सकाशाद् अग्रजन्मनः।
स्वं-स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥

## अभ्यासार्थ प्रश्न

१. अपने देश के वैभव का वर्णन अपनी भाषा में करिए।

२. शंकराचार्य, रामानुजाचार्य, वल्लभाचार्य और दयानन्द सरस्वती कौन तथा इन्होंने किन मतों का प्रचार किया?

३ हिमालय का वर्णन स्वरचित संस्कृत में करिए।

४ सन्धि-विच्छेद करिए और देखिए ये सब स्वर सन्धियाँ है—
स्वन्तरात्मापि, मूलमिदमेव, अत्रैव, अस्यैव, सत्यमभिहितम्।

५. निम्न शब्दों के रूप चलाइए —
सरित्, स्वामिन्, संस्कृति, सभ्यता।

# नवमः पाठः

# अतिलोभो न कर्त्तव्यः

[ प्रस्तुत पाठ पं० विष्णुशर्मा विरचित 'पञ्चतन्त्र' से लिया गया है पञ्चतन्त्र में प्राचीन कथाओं तथा नीतिश्लोकों का अत्यन्त उत्तम ढंग से सकलन हुआ है। इसका समय छठी शताब्दी से पूर्व है। इसका अनुवाद संसार की लग भग सभी प्रसिद्ध भाषाओं—अरबी, फारसी, लैटिन, इङ्गलिश आदि मे हुआ है। ग्रीक भाषा मे लिखी हुई 'ईसप' कथाओं का आधार भी पञ्चतन्त्र ही है। ]

अस्ति कस्मिंश्चिद् अधिष्ठाने हरिदत्तो नाम ब्राह्मणः। तस्य च कृषिं कुर्वतः सदैव निष्फलः कालोऽतिवर्तते। एकस्मिन् दिवसे स ब्राह्मणो ग्रीष्मावसाने घर्मार्त्तः स्वक्षेत्रमध्ये वृक्षच्छायायां प्रसुप्त आसीत्। तत्र अनतिदूरे वल्मीकोपरि प्रसारितं बृहत्फटायुक्तं भीषणं भुजङ्गमं दृष्ट्वा चिन्तयामास–'नूनमेषा क्षेत्रदेवता मया कदाचिद् अपि न पूजिता, तेनेदं मे कृषि-कर्म विफलीभवति; तदस्या अहं पूजामद्य करिष्यामि' इति अवधार्य कुतोऽपि क्षीरं याचित्वा शरावे निक्षिप्य वल्मीकान्तिकमुपागम्य उवाच –'भो क्षेत्रपाल! मया एतावन्तं कालं न ज्ञातं यत्त्वमत्र वससि, तेन पूजा न कृता, तत्साम्प्रतं क्षमस्व' इत्येवमुक्त्वा दुग्धं च निवेद्य, गृहाभिमुख प्रायात्। अथ प्रातः यावदागत्य पश्यति, तावद् दीनारमेकं शरावे दृष्टवान्। एवं च प्रतिदिनमेकाकी समागत्य तस्मै क्षीरं ददाति, एकैकं च दीनारं गृह्णाति।

अथ एकस्मिन् दिवसे क्षीरं नयनाय पुत्रं नियुज्य ब्राह्मणो ग्रामान्तरं जगाम। पुत्रोऽपि क्षीरं तत्र नीत्वा संस्थाप्य च पुनर्गृहं समायातः। दिनान्तरे तत्र गत्वा दीनारमेकं दृष्ट्वा गृहीत्वा च चिन्तितवान्–'नूनं सौवर्ण-दीनार-पूर्णोऽयं वल्मीकः। तदेनं सर्पं हत्वा सर्वमेकवारं ग्रहीष्यामि' इत्येवं सम्प्रधार्य अन्येद्युः क्षीरं ददता ब्राह्मणपुत्रेण स सर्पः लगुडेन शिरसि ताडितः, ततः कथमपि दैववशाद् अमुक्तजीवित एव रोषात्तमेव तीव्रविषदशनैस् तथा अदशत्—यथा सद्यः पञ्चत्वमुपागतः, स्वजनैश्च नातिदूरे क्षेत्रस्य काष्ठसञ्चयैः संस्कृतः। अथ द्वितीय-दिने तस्य पिता समायातः स्वजनेभ्यः सुतविनाशकारणं श्रुत्वा तथैव समर्थितवान्। उक्तवांश्च–'अतिलोभो न कर्त्तव्यः।' अतिलोभादेव मम पुत्रस्येयं दशा जाता।

## अभ्यासार्थ प्रश्न

१. इस कथा का सारांश अपनी भाषा में लिखिए तथा लोभ के दुष्परिणाम की अन्य कहानी भी कहिए।

२ पुत्र ने दीनार प्राप्त कर क्या विचार किया और क्या आचरण किया?

३. सन्धि-विच्छेद करिए और संधियों के नाम बताइए—
कस्मिश्चित्, स्वजनैश्च, उक्तवांश्च।

४. विग्रहसहित समास लिखिए और देखिए ये सब तत्पुरुष समास हैं—
ग्रीष्मावसाने, धर्मार्त्त, स्वक्षेत्रमध्ये, ब्राह्मणपुत्रेण, दीनारपूर्णः।

५ जाता, उपागतः, ताडितः, चिन्तितवान्, दृष्टवान् क्रियाओं पर ध्यान दीजिए और देखिए ये किस प्रकार बनी है, इसी प्रकार की अन्य क्रियाओं के प्रयोग कीजिए।

## दशमः पाठः

# क्षमा हि परमं तपः

[ प्रस्तुत पाठ क्षेमेन्द्र कृत 'बृहत्कथामंजरी' से लिया गया है। इनका समय ग्यारहवीं शताब्दी है। ये काश्मीर के राजा अनन्त के आश्रित-कवि थे। यहाँ शुभनय नामक मुनि द्वारा अपकार करनेवाले चोरों को भी क्षमा कर देने की कथा सुन्दर ढंग से वर्णित है। ]

अभूच्छुभनयो नाम मुनिः केदारकन्दरे।
चौरास्तदाश्रमोपान्ते नालभन्त हृतं धनम् ॥ १ ॥

दाम्भिकोऽयं वृथा मौनी चौराणामपि चौर्यकृत्।
उक्त्वेति चक्रुस्ते कोपात्तं हीनचरणेक्षणम् ॥ २ ॥

दस्युभिर्निगृहीतं तं नृपतिः शेखर मुनिः।
शिष्यः प्राप्तः प्रणामाय ददर्श पतितं भुवि ॥ ३ ॥

चारचक्षुस् ततश् चौरान् तानानाय्य स भूपतिः।
दिदेश तद्वधं क्रुद्धस्तथाऽमन्यत नो मुनिः ॥ ४ ॥

यतात्मना तेन च ते रक्षिता राजशासनात्।
चौरा ययुः स च प्राप मुनिः सिद्धिमनुत्तमाम् ॥ ५ ॥

पुण्यतीर्थमनायासं क्रतुरद्रव्य डम्बरः।
अशोषणं शरीरस्य क्षमा नाम परं तपः ॥६॥

क्षेत्र त एव पुण्यस्य भाजनं यशसां च ते।
प्रसूता हृदये येषां क्षान्तिवल्ली महाफला ॥७॥

## अभ्यासार्थ प्रश्न

१. इस कथा को स्वरचित संस्कृत में लिखिए।

२. चोरों ने क्या समझकर मुनि को दण्ड दिया और मुनि ने उनका क्या उपकार किया ?

३. अर्थ लिखिए—

अद्रव्यडम्बरः, हीनचरणेक्षणम्, चौर्यंकृत, यतात्मना।

४. संधि-विच्छेद करिए—

चौरास्तदा, श्रमोपान्ते, अभूच्छ्रमनय, उक्त्वेति, दस्युभिर्निगृहीत, क्रुद्धस्तथामन्यत।

५. विग्रह सहित समास लिखिए और देखिए ये बहुव्रीहि समास हैं—

हीनचरणेक्षणम्, चारचक्षुः।

६. रूप लिखिए—

यशस्, चक्षुस्, सिद्धि और मुनि।

## एकादशः पाठः

# आत्मोत्सर्गः

[ प्रस्तुत पाठ संस्कृत के सर्व-प्रथम नाटककार 'भास' के 'मध्यम-व्यायोग' नामक नाटक से लिया गया है। भास का समय कतिपय विद्वानों के अनुसार तृतीय शतक है; परन्तु दूसरे विद्वान् इन्हें अत्यन्त प्राचीन मानते हैं। इन्होंने तेरह नाटक लिखे हैं। इनकी भाषा सरस तथा सुबोध है। अपने कुटुम्ब की रक्षा के लिए अपने प्राणों का उत्सर्ग करनेवाले द्वितीय पुत्र के चरित्र पर यहाँ प्रकाश डाला गया है। ]

[ पत्नी सुतत्रय परिवृतो ब्राह्मणः प्रविशति पृष्ठतश्च घटोत्कच. ]

घटोत्कचः—भो ब्राह्मण तिष्ठ-तिष्ठ। न गन्तव्यं पदात्पदमपि।

ब्राह्मणः—ब्राह्मणि! न भेतव्यम्। न भेतव्यं मम पुत्रकाः। शंके नातिदूरेण पाण्डवाश्रमेण भवितव्यम्।

प्र० पुत्रः—भोः तात! न तत्र पाण्डवा इति मन्ये।

वृद्धः—पुत्र! कथं त्वं जानीषे?

प्रथमः—श्रुतं मया तस्माद् आश्रमादागतेन केनचिद् ब्राह्मणेन-'शतकुम्भं नाम यज्ञमनुभवितुं महर्षेः धौम्यस्य आश्रमं गताः' इति।

वृद्धः—हन्त, हताः स्मः।

प्रथमः—तात, न तु सर्व एव । आश्रम-परिपालनार्थमिह स्थापितः किल मध्यमः । परं सोऽप्यस्यां वेलायां व्यायामार्थमन्यत्र गतः इति श्रूयते ।

वृद्धः—हन्त, निराशाः स्मः ।

प्रथमः पुत्रः—भवतु प्रार्थयिष्ये तावदेनमेव । भोः पुरुष ! अस्ति अस्माकं मोक्षः ?

घटोत्कचः—मोक्षोऽस्ति समयतः ।

वृद्धः—कः समयः ?

घटोत्कचः—अस्ति मे तत्र भवती जननी । तयाहमाज्ञप्तः—'पुत्र मम उपवासनिसर्गार्थं कश्चिन्मानुष आनेतव्यः' इति । ततो मया आसादितो भवान् । अतः—

पत्न्या चारित्र्यशालिन्या द्विपुत्रो मोक्षमिच्छसि ।
बलाबलं परिज्ञाय पुत्रमेकं विसर्जय ॥१॥

वृद्धः—ब्राह्मणि ! एष मे निश्चयः—

कृतकृत्यं शरीरं मे परिणामेन जर्जरम् ।
राक्षसाग्नौ सुतापेक्षी होष्यामि विधिसंस्कृतम् ॥२॥

ब्राह्मणी—आर्य, मा मैवम् । पतिमात्रधर्मिणी पतिव्रतेति नाम । गृहीतफलेनैतेनशरीरेण आर्यं कुलं च रक्षितुमिच्छामि ।

घटोत्कचः—न खलु स्त्रीजनोऽभिमतः तत्र भवत्याः । निवर्तयितव्यं युष्माभिः ।

वृद्धः—अहमनुगमिष्यामि भवन्तम्।

घटोत्कचः—हं वृद्ध ! त्वमपसर।

प्रथमः—भोः तात ! ब्रवीमि खलु तावत्किंचन्।

वृद्धः—पुत्र, कथय।

प्रथमः—

मम प्राणैर् गुरुप्राणानिच्छामि परिरक्षितुम्।
रक्षणार्थं कुलस्यास्य मोक्तुमर्हति मां भवान्॥३॥

द्वितीयः पुत्रः—आर्य, मा मैवम्—

ज्येष्ठो भ्राता पितृसमः कथितो ब्रह्मवादिभिः।
ततोऽहं कर्तुमस्मि अर्हो गुरुणां प्राणरक्षणम्॥४॥

वृद्धः—ज्येष्ठमिष्टतमं न शक्नोमि परित्यक्तुम्।

ब्राह्मणी—यथा आर्यो ज्येष्ठमिच्छति तथा अहमपि कनिष्ठमिच्छामि।

द्वितीयः—धन्योऽहं कृतकृत्योऽहम्। आगच्छामि, भो !

घटोत्कचः—अहं प्रीतोऽस्मि शीघ्रमागच्छ।

द्वितीयः—

धन्योऽस्मि यद् गुरु प्राणाः स्वैः प्राणैः परिरक्षिताः।
बन्धुस्नेहात् हि महतः कालस्नेहस्तु दुर्लभः॥५॥

घटोत्कचः—अहो स्वजनवात्सल्यमस्य बटोः।

द्वितीयः—भोः तात ! अभिवादये । भो अम्ब ! अभिवादये ।

उभौः—जात ! चिरंजीव ।

द्वितीयः—अनुगृहीतोऽस्मि, यत् स्व-प्राणोत्सर्गेण परिवाररक्षां कुलरक्षां च विधास्यामि ।

( इति घटोत्कचेन सह निष्क्रान्तः )

## अभ्यासार्थ प्रश्न

१. इस पाठ से क्या शिक्षा मिलती है ? अपने शब्दों मे लिखो ।

२. घटोत्कच कौन था और वह किस हेतु मनुष्य को चाहता था ?

३. मध्यम पाण्डव कौन था और उसका घटोत्कच से क्या सम्बन्ध था ?

४. गन्तव्य, मेलव्यं, भवितव्यम्, आनेतव्यम् शब्द किस प्रकार बने है ? इसी प्रकार अन्य शब्दो को भी निष्पन्न कीजिये ।

५. विग्रह सहित समास बताइये—
पाण्डवाश्रमेण, आश्रमपरिपालनार्थ, उपवासनिसर्गार्थ, गुरुप्राणान्, स्वजनवात्सल्यम् ।

६. 'घटोत्कचेन सह निष्क्रान्तः' में घटोत्कचेन में तृतीया विभक्ति का प्रयोग क्यो हुआ है ?

द्वादशः पाठः

# भगवान् महावीरः

[ जैनियों के प्रसिद्ध तीर्थङ्कर श्री महावीर स्वामी ने अहिंसा का उपदेश देकर भारतीय जन-जीवन में नये प्राणों का सञ्चार किया, यह सर्वविदित है। प्रस्तुत लेख में उन्हीं के त्यागमय जीवन पर प्रकाश डाला गया है। ]

२५५० वर्षेभ्यः प्राक् यदा जगति सर्वत्र हिंसायाः साम्राज्यं प्रसृमासीत्। स्वार्थपरायणा जनाः संकोचं विहाय घोरपापकर्मरता आसन्। दुर्बला निरपराधा मूकाः पशवश्च यज्ञकुण्डे जीवन्त एव भस्मीक्रियन्ते स्म। ईदृशे कराले काले लोककल्याणाय चैत्रशुक्लपक्षे त्रयोदश्यां तिथौ कुण्डलपुरनगरे राज्ञः सिद्धार्थस्य गृहे महिष्याः विशालाया गर्भतो जातो भगवान् महावीरो वर्धमानो वा भारतभूमिमलञ्चकार।

स जन्मत एव निर्भयः पराक्रमी चासीत्। बाल्य एव भयानकं सर्पं लगुडेन प्रहृत्य प्रदर्शितवानसौ स्वीयं पराक्रमं निर्भयत्वं च। सुखावहं बाल्यं यापयित्वा, पूर्णं तारुण्यं प्राप्य त्रिंशद्वर्षवयस्कः सन् सर्वं राज्यवैभवं परित्यज्य मुक्तये गहने वने उग्रं तपश्चचार। द्वादशवर्षाणि घोरं तपश्चरित्वा, असह्यां यातनां च सहित्वा, जैनेश्वरीं दीक्षां गृहीत्वा 'महान् तपस्वी' समजायत। ततश्चत्वारिंशे वर्षे स्वस्वरूपस्य यथार्थ

ज्ञानमधिगतवान्, सर्वज्ञः परमात्मा च जातः । ततः स भारतस्यानेकेषु नगरेषु परिभ्रमणं कृतवान् । अहर्निशं प्रयत्नेन अहिंसाप्रधानस्य जैनधर्मस्य प्रचारं, यज्ञेषु जीवानां बलिदानस्य च घोरं विरोधं कृतवान् । तद्विषये प्रसिद्धिरियमासीत् यत्— 'तदाश्रमे गौः मृगराजश्च एकस्मिन्नेव निपाने निर्विरोधं जलं पिबतः स्म, सर्पो मयूरश्च स्वाभाविकं वैरं परित्यज्य सहैव आक्रीडेताम् ।' एतेनैव स सिंहचिह्नधारी बभूव ।

इत्थं भगवान् महावीरः प्राणिनः स्वोपदेशामृतं पाययित्वा द्वासप्ततिवर्षमिते आयुषि कार्तिकमासस्य अमावस्यायां प्रातः दीपावली शुभावसरे पावापुरनगरे सरस्तीरे निर्वाणपदमलभत ।

जीवेषु दयनम्, अहिंसायाः पालनम्, रात्रिभोजनस्य त्यागः, आत्मवत् सर्वभूतेषु वर्तनम्, इत्यादीनि तस्य प्रमुखानि व्रतानि उपदेशाश्च आसन् । तेन महात्मना अहिंसायाः प्रचारं कृत्वा जगति अभिनवा शान्तेः सरणिः प्रदर्शिता । एतद्विषये गान्धिमहाभागस्यापि महत्त्वपूर्णमिदं कथनमस्ति यद्— 'अहिंसातत्त्वस्याविष्कारे भगवान् स्वामी महावीरः प्रमुखं पदं वत्ते' इति ।

अतः सर्वेषां प्राणिनां कर्त्तव्यमिदमस्ति, यत्ते तस्य पुण्यात्मनः विश्ववन्दनीयस्य, बालब्रह्मचारिणः, अहिंसाया अनन्यावतारस्य भगवतो महावीरस्य जीवनमादर्शं मत्वा आत्मनः कल्याणम् आचरेयु: ।

## अभ्यासार्थ प्रश्न

१. भगवान् महावीर के जीवन-चरित्र को स्वरचित संस्कृत में संक्षेप में लिखिये।

२. भगवान् महावीर के उपदेश क्या हैं? इस महापुरुष के विषय में महात्मा गान्धी के क्या विचार हैं?

३. प्रहृत्य, यापयित्वा, प्राप्य, कृत्वा, पालयित्वा, मत्वा, विहाय, परित्यज्य आदि में किन प्रत्ययों का प्रयोग हुआ है? ये प्रत्यय कब काम में आते हैं? इनका अभ्यास करिये।

४. सविग्रह समास लिखिये—
घोरपापकर्मरताः, लोककल्याणाय, राज्यवैभवम्, रात्रिभोजनत्यागः, पुण्यात्मनः।

५. आत्मन् शब्द के रूप चलाइये।

## त्रयोदशः पाठः

# प्रश्नोत्तरी

[ प्रस्तुत पाठ भगवान् वेदव्यास रचित 'महाभारत' के 'यक्ष-युधिष्ठिर संवाद' से संकलित किया गया है। महाभारत भारतीय संस्कृति एवं सभ्यता का भाण्डार है। आधुनिक विद्वानों के अनुसार महाभारत का काल ६०० वर्ष ईसा पूर्व है। ]

प्र०—किंस्विद् गुरुतरं भूमेः, किंस्विदुच्चतरं च खात्।
किंस्विच्छीघ्रतरं वायोः, किंस्विद् बहुतरं तृणात्॥ १॥

उ०—माता गुरुतरा भूमेः, खात् पितोच्चतरस्तथा।
मनः शीघ्रतरं वातात्, चिन्ता बहुतरी तृणात्॥ २॥

प्र०—किंस्वित् प्रवसतो मित्रं, किंस्विन्मित्रं गृहे सतः।
आतुरस्य च किं मित्रं, किंस्विन्मित्रं मरिष्यतः॥ ३॥

उ०—विद्या प्रवसतो मित्रं, भार्या मित्रं गृहे सतः।
आतुरस्य भिषङ्मित्रं, दानं मित्रं मरिष्यतः॥ ४॥

प्र०—मृतः कथं स्यात् पुरुषः, कथं राष्ट्रं मृतं भवेत्।
श्राद्धं मृतं कथं वा स्यात्, कथं यज्ञो मृतो भवेत्॥ ५॥

उ०—मृतो दरिद्रः पुरुषो, मृतं राष्ट्रमराजकम्।
मृतमश्रोत्रियं श्राद्धं, मृतो यज्ञस्त्वदक्षिणः॥ ६॥

प्र०—कः शत्रुर्दुर्जयः पुंसां, कश्च व्याधिरनन्तकः ।
कीदृशश्च स्मृतः साधुरसाधुः कीदृशः स्मृतः ॥ ७ ॥

उ०—क्रोधः सुदुर्जयः शत्रुर्लोभो व्याधिरनन्तकः ।
सर्वभूतहितः साधुरसाधुर्निर्दयः स्मृतः ॥ ८ ॥

प्र०—कः पण्डितः पुमान्ज्ञेयो, नास्तिकः कश्च उच्यते ।
को मूर्खः कश्च कामः स्यात् को मत्सर इति स्मृतः ॥ ९ ॥

उ०—धर्मज्ञः पण्डितो ज्ञेयः, नास्तिको मूर्ख उच्यते ।
कामः संसारहेतुश्च, हृत्तापो मत्सरः स्मृतः ॥ १० ॥

प्र०—राजन ! कुलेन वृत्तेन स्वाध्यायेन श्रुतेन वा ।
ब्राह्मण्यं केन भवति प्रब्रूह्येतत् सुनिश्चितम् ॥ ११ ॥

उ०—शृणु यक्ष ! कुलं तात न स्वाध्यायो न च श्रुतम् ।
कारणं हि द्विजत्वे स्याद् वृत्तमेव न संशयः ॥ १२ ॥

वृत्तं यत्नेन संरक्ष्यं ब्राह्मणेन विशेषतः ।
अक्षीणवृत्तो न क्षीणो वृत्ततस्तु हतो हतः ॥ १३ ॥

## अभ्यासार्थ प्रश्न

१. युधिष्ठिर और यक्ष का यह वार्तालाप कब हुआ था और इसका अन्तिम परिणाम क्या निकला ?

२. भूमि से भी गुरु और आकाश से भी उच्चतर कौन है ?

३. मनुष्य, राष्ट्र और यज्ञ मरे हुए कब कहे जाते हैं ?

४. वास्तविक आत्मशासक किसमें है ?

५. असाधु और साधु के क्या लक्षण यहाँ बताए गए हैं ?

६. संधि-विच्छेद करिए—

यशस्त्वदलिप्सः, किस्विच्छीघ्रतरं, हृत्तापः, उच्चतरस्तथा ।

७. गुरुतर, उच्चतर, शीघ्रतर और बहुतर में कौनसा प्रत्यय प्रयुक्त हुआ है ?

इसी से निष्पन्न अन्य शब्दों का प्रयोग करिए ।

---

चतुर्दशः पाठः

# भोजस्य चरमश्लोकः

[ परिचय—प्रस्तुत पाठ भी कवि बल्लालसेन कृत 'भोजप्रबन्ध' से लिया गया है, जिसका वर्णन पाठ तीन में हो चुका है। यहां कालिदास की रचना-चातुरी का प्रधान रूप से दिग्दर्शन हुआ है। ]

एकदा भोजराजः कविकुलगुरुं कालिदासं प्राह—'सुकवे! त्वमस्माक निधनं वर्णय।' तच्छ्रुत्वा क्रुद्धः कालिदासो राजान विनिन्द्य क्षणेन तं देशं त्यक्त्वा विलासवत्या सह एकशिलानगर गतवान्। ततः कालिदासवियोगेन शोकाकुलो राजा त, मृगयितुं कापालिकवेषं धृत्वा क्रमेण एकशिलानगरमगच्छत्। तत्र कालिदासो योगिनं दृष्ट्वा तं सामपूर्वमपृच्छत्—

योगिन्! 'कुत्र ते स्थितिः'? इति

योगी—अस्माकं धारानगरे वसतिः।

कविः—तत्र भोजः कुशली किम्?

योगी—किं मया वक्तव्यम्?

कविः—तत्र अतिशयवार्तास्ति चेत् सत्यं कथय।

योगी—भोजो दिवं गतः।

ततः कविर्भूमौ निपत्य प्रलपति—'देव ! त्वां बिनाऽस्माकं क्षणमपि भूमौ न स्थितिः, अतस्त्वत् समीपमहमागच्छामि' इति कालिदासो बहुशः विलप्य चरमश्लोकं कृतवान्—

अद्य धारा निराधारा, निरालम्बा सरस्वती ।
पण्डिताः खण्डिताः सर्वे, भोजराजे दिवं गते ॥ १ ॥

एवं यदा कविना चरमश्लोक उक्तः, तदैव स योगी भूतले विसंज्ञोऽपतत् ।

ततः कालिदासस्तथाविधं तमवलोक्य, अयं भोज एव इति निश्चित्य—'अहह महाराज ! तत्रभवताऽहं वञ्चितोऽस्मि' इति कथयित्वा सत्वरं तं श्लोकं प्रकारान्तरेण पठितवान्—

"अद्य धारा सदाधारा, सदालम्बा सरस्वती ।
पण्डिताः मण्डिताः सर्वे, भोजराजे भुवं गते ॥ २ ॥"

ततो भोजः कालिदासमालिङ्ग्य, प्रणम्य च तं, तेन सह धारानगरमगच्छत् ।

## अभ्यासार्थ प्रश्न

१ इस पाठ को अपने शब्दों में लिखिए ।

२ सन्धि-विच्छेद करिए—तच्छ्रुत्वा, अतस्त्वत्, वञ्चितोऽस्मि ।

३ अर्थ लिखिए—

निधन, वसतिः, अतिशयवार्ता, चरमश्लोक. ।

४ निम्न क्रियाओं के रूप लट्, लोट् एवं विधिलिङ् में लिखिए—

अगच्छत्, अपतत्, विलप्य, पठितवान् ।

## पंचदशः पाठः

# शीलं परं भूषणम्

[ यह पाठ बौद्ध-साहित्य के सुप्रसिद्ध 'राजाववाद' जातक के आधार पर प्रस्तुत किया गया है। जातक कथाएं बौद्ध-साहित्य का प्रधान अङ्ग हैं। ये पाली भाषा में हैं। ईसा की तीसरी शताब्दी में श्री आर्यशूर ने स्वरचित 'जातकमाला' में इन कथाओं को संस्कृत भाषा में लिखा था। इनमें बुद्ध के प्राचीन जन्मों की अत्यन्त मनोरंजक कथाएं हैं। इनके अनुशीलन से तत्कालीन भारत की ऐतिहासिक, भौगोलिक एवं सामाजिक दशाओं पर भी पर्याप्त प्रकाश पड़ता है। यहां शील का महत्त्व अत्यन्त रोचक कथानक द्वारा प्रदर्शित किया गया है। ]

अतीते जन्मनि वाराणस्यां ब्रह्मदत्ते राज्यं कुर्वति बोधिसत्वस् तस्याग्रमहिष्या गर्भतो जन्म लेभे। एकादशेऽहनि पिता तस्य कुमारस्य 'ब्रह्मदत्तकुमार' इति नाम कृतवान्। अथ क्रमशः स षोडशवर्षवयस्कस् तक्षशिलां गत्वा योग्येभ्यो गुरुभ्यः सकलाः कलाः समग्रा विद्याश्च अधिगतवान्। पितरि दिवंगते स धर्मेण प्रजाः शशास। तस्मिन्नेवं धर्मेण प्रजाः शासति अमात्य अपि धर्मेण व्यवहार-निर्णयं कर्तुं आरेभिरे। क्रमशः सर्वोऽपि कूटार्थव्यवहारो विनष्टः। तदभावाच्च न कोऽपि जनो न्यायालयं गच्छति स्म। बोधिसत्वोऽचिन्तयत्—'मयि धर्मेण राज्यं कुर्वति विनिश्चयार्थाय न कोऽपि आगच्छति। सर्वे उप-

द्रवाः शान्ताः। इदानीं मया आत्मनोऽवगुणा अनुसंधेयाः। तान् परिज्ञाय विहाय च गुणानेव अनुवर्तिष्ये।' इति निश्चित्य स नगरे वहिर्नगरे चतुर्षु द्वारेषु ग्रामेषु च बभ्राम। परं कञ्चिद्-गुणवादिनम् अनुपलभ्य आत्मनो गुणकथामेव श्रुत्वा 'जनपदं गमिष्यामि' इति मतिं कृत्वाऽमात्ये राज्यभारमारोप्य रथमारुरोह। सारथिद्वितीयश्च अज्ञातवेषेण नगरात् निष्क्रम्य जन-पदाज्जनपदं गच्छन् राज्यस्य यावत् पर्यन्तभूमि गतवान्। परं सर्वत्रैव आत्मनो गुणकथामेव श्रुत्वा प्रत्यन्तसीमतः राजधानीं प्रति निवर्तितुं मतिं चकार।

तस्मिन्नेव समये मल्लिको नाम कोसलराजोऽपि धर्मेण राज्यं कुर्वन् आत्मनोऽगुणवादिनं ज्ञातुमज्ञातवेषेण परिभ्रमन् तं प्रदेशमायातः। तावुभावपि एकस्मिन् संकटे शकटमार्गे परस्परा-भिमुखम् अभूताम्।

अथ मल्लिकराजस्य सारथिः वाराणसीराजस्य सारथिं दृष्ट्वा—'तव रथमपसारय' इत्याह। सोऽपि अहो सारथे! तव रथम-पसारय, अस्मिन् रथे वाराणसीराज्यस्य स्वामी महाराजो ब्रह्मदत्तकुमारो निषण्ण इत्याह। इतरोऽपि अहो सारथे! अस्मिन् रथे कोसलराज्यस्य स्वामी महाराजो मल्लिको निषण्णः, तव रथमपसार्य अस्माकं राज्ञो रथस्यावकाशं देहि, इति उवाच। वाराणसीराजस्य सारथिः—'अयमपि किल राजैव, किं नु खलु कर्त्तव्यम्' इति चिन्तयन्, अस्ति एष उपायः, 'वयः पृष्ट्वा दहरतरस्य रथमपसार्य महत्तरस्यावकाशं प्रदापयिष्यामि' इति

निश्चयं कृत्वा तं सारथिं कोसलराजस्य वयः पप्रच्छ । उभयमपि राज्यपरिमाणे, वयसि, धने, बले, यशसि, जातौ, गोत्रे, कुले च समं ज्ञात्वा 'शीलवत्तरस्य अवकाशो देयः, इति विचार्य स सारथिः 'युष्माकं राज्ञः शीलाचारः कीदृशः' इत्यप्राक्षीत् कोसलराजसारथिम् । स च आत्मनो राज्ञः शीलाचारं प्रकाशयन् प्रथमां गाथामाह—

"दृढं दृढस्य क्षिपति, मल्लिको मृदुना मृदुम् ।
साधुमपि साधुना जयति, असाधुमपि असाधुना ॥
एतदृशोऽयं राजा मार्गादुद्याहि सारथे !" इति ।

वाराणसीराजस्य सारथिस्तु तच्छ्रुत्वा यद्येते गुणाः, अगुणाः पुनः कीदृशा इत्युक्त्वा आत्मनो राज्ञः शीलाचारं वर्णयन् द्वितीयां गाथामाह—

"अक्रोधेन जयति क्रोधं, असाधुं साधुना जयति ।
जयति कदर्यं दानेन, सत्येनालीक वादिनम् ॥
एतदृशोऽयं राजा मार्गादुद्याहि सारथे !" इति ।

एवमुक्ते मल्लिकराजः सारथिश्च रथादवतीर्य रथमपनीय वाराणसीराजाय मार्गमदाताम् ।

## अभ्यासार्थ प्रश्न

१. इस कहानी का सार अपने शब्दों में लिखिये तथा इससे जो शिक्षा मिलती है- उसे भी निर्देशित कीजिये ।

२. सरल संस्कृत मे वाराणसीराज एवं कोसलराज के सारथियों की वार्तालाप को नाटकीय ढग पर लिखिए।

३. निम्न शब्दों के रूप चलाइये :—
सीमन्, आत्मन , सारथि, अगुणवादिन्, महिषी।

४. सविग्रह समास लिखिए—
कूटार्थव्यवहार:, सारथिद्वितीय:, अज्ञातवेषेण, कोसलराजसारथिम्।

५ निम्न शब्द किस प्रकार बने है :—
वर्णयन्, परिभ्रमन्, गच्छन्, कुर्वन्, प्रकाशयन्। इन शब्दों का प्रयोग कीजिए।

---

## षोडशः पाठः

# प्रहेलिकाः

[ संस्कृत वाङ्मय में साहित्य के सभी अङ्गों का विकास हुआ है । यहाँ 'सुभाषितरत्न भाण्डागार' से सङ्कलित कुछ पहेलियाँ उदाहरण रूप में प्रस्तुत की जा रही हैं । ]

अपदो दूरगामी च साक्षरो न च पण्डितः ।
अमुखः स्फुटवक्ता च यो जानाति स पण्डितः ॥ १ ॥

गोपालो नैव गोपालस्त्रिशूली नैव शङ्करः ।
चक्रपाणिः स नो विष्णुर्यो जानाति स पण्डितः ॥ २ ॥

नरनारी समुत्पन्ना सा स्त्री देह विवर्जिता ।
अमुखी कुरुते शब्दं जातमात्रा विनश्यति ॥ ३ ॥

न तस्यादिर्न तस्यान्तो मध्ये यस्तस्य तिष्ठति ।
तवाप्यस्ति ममाप्यस्ति यदि जानासि तद्वद ॥ ४ ॥

य एव आदि स एवान्तो मध्ये भवति मध्यमः ।
य एतन्नाभिजानीयात्तृणमात्रं न वेत्ति सः ॥ ५ ॥

श्यामं च वर्तुलाकारं पुंनाम चतुरक्षरम् ।
शकारादि मकारान्तं यो जानाति स पण्डितः ॥ ६ ॥

कृष्णमुखी न मार्जारी, द्विजिह्वा न च सर्पिणी ।
पञ्चभर्त्री न पाञ्चाली यो जानाति स पण्डितः ॥ ७ ॥

# अभ्यासार्थ प्रश्न

१. इन पहेलियों के उत्तर दीजिये ।

२. 'गोपालो नैव गोपालः' में गोपाल शब्द के क्या दो अर्थ है ? इस प्रकार एक ही शब्द के दो अर्थ होने पर क्या अलंकार होता है ?

३. पञ्चभर्त्री, द्विजिह्वा, चतुरक्षरम् में सविग्रह समास बताइये ।

४ जानाति में धातु, वचन का निर्देश करते हुए उसके रूप लोट एव विधिलिङ् में चलाइये ।

---

## सप्तदशः पाठः

# विनोदवार्ता

[ इस पाठ में एक शिष्ट हास्य का उदाहरण प्रस्तुत किया गया है। बधिर तथा ज्वर से पीड़ित उसके मित्र का वार्तालाप यहाँ वर्णित हुई है। संस्कृत-साहित्य में ऐसे हास्य के अनेक उदाहरण मिलते हैं। ]

कश्चिद् बधिरः आपणात् वृन्ताकं गृहीत्वा गृहं प्रत्यागच्छन् आसीत्। मार्गे केनचिन्मित्रेण पृष्टम्—'अपि कुशली वयस्य?' बधिरः प्रत्यवदत्—'वृन्ताकं आनीतः' इति। स पुनः प्रपच्छ—'अपि कुशलं बालानाम्?' स उदतरत्—'शाकं कृत्वा भक्षयिष्यामः' इति।

अथ कदाचित्स एव बधिरः स्वमित्रं ज्वरार्तं श्रुत्वा तं द्रष्टुमिच्छन् गृहात् प्रस्थितः। मार्गे गच्छन् मनस्येवम् अकरोत्। यन्मित्रसकाशं गत्वा पूर्वम्, 'अयि! सह्यो ज्वर-वेगः', इति पृच्छेयम्। 'सह्यः किञ्चित्' इति स प्रतिवदेत्। ततोऽहं तं वदिष्यामि—'भगवतः प्रसादेन तथैव वर्तताम्' इति।

पुनः किमौषधं सेवसे, इति मया पृष्टे स कथयिष्यति इदमौषधं सेवे। तदाऽहं तदेव भद्रतरम्, इति वक्ष्यामि। अनन्तर,

कस्ते चिकित्सकः, इति प्रवक्ष्यामि। असौ मम चिकित्सकः, इत्येव उत्तरं स दास्यति। अहं च—'स एव श्रेयान्, तं मा परित्यज', इत्थं तदनुरूपं सम्भाष्य मित्रं च आपृच्छय स्वगृहं प्रत्यागमिष्यामि। एवं चिन्तयन् स बधिरः मित्रं प्राप्य सादरमपृच्छत्—

बधिरः—मित्र ! अपि सह्यो ज्वरावेग इति ?

ज्वरार्तः—तथैव वर्तते।

बधिरः—भगवतः प्रसादेन तथैव वर्तताम्। किमौषधं सेवसे ?

ज्वरार्तः—ममौषधं मृत्तिकैव।

बधिरः—तदेव भद्रतरम्। कस्ते चिकित्सकः ?

ज्वरार्तः—( स-कोपम् ) मम वैद्यो यम एव।

बधिरः—स एव श्रेयान्, तं मा परित्यज।

अनेन प्रकारेण प्रतिकूलानि वचनानि श्रुत्वा स रोगी दुःसहेन कोपेन समाविष्टः परिजनमादिशत् भोः ! किमयम् एवं क्षते क्षारं प्रक्षिपति, निःसार्यतामयम् अर्धचन्द्रदानेन। एवं स मूढः परिजनेन गलहस्तिकया बहिर् निष्कासितः। साधूक्तम्—

परोक्तं साध्वनाकर्ण्य न युक्तं प्रतिभाषितुम्।
बहिर्निष्कासितः कोऽपि बधिरः प्रतिकूलवाक्॥

## अभ्यासार्थ प्रश्न

१. ज्वरार्त मित्र तथा बधिर के वार्तालाप को सरल संस्कृत में लिखिये ।

२. इस पाठ से क्या शिक्षा मिलती है ? लिखिये ।

३. 'क्षते क्षार प्रक्षिपति' तथा 'अर्धचन्द्रदानेन' को स्पष्ट कीजिये ।

४. 'मम वैद्यो यम एव' मे ज्वरार्त का क्या आशय था और बधिर ने क्या समझा तथा क्या उत्तर दिया ?

५. द्रष्टुम्, प्रतिभाषितुम् में किन प्रत्ययों का प्रयोग हुआ है ? ऐसे ही अन्य शब्द बनाकर व्यवहार कीजिये ।

६. सन्धि-विच्छेद कीजिये—

बहिर्निष्कासितः, कोऽपि, मनस्येवम्, यन्मित्रसकाशं, मृत्तिकेव, यम एव ।

## अष्टादशः पाठः

# पितृसेवा परो धर्मः

[ यह पाठ सोमदेव कृत 'कथासरित्सागर' से लिया गया है। ये काश्मीर के राजा अनन्त तथा क्षेमेन्द्र के समकालीन थे। इनका समय ११वीं शताब्दी है। माता-पिता की सेवा से विमुख होकर तपस्या में निरत होनेवाले पुत्र को अन्तिम सिद्धि माता-पिता की सेवा से ही प्राप्त होती है, न कि तपस्या से; यही इस पाठ में दर्शित किया गया है। ]

आसीत्पुरा कोऽपि ब्राह्मणबालः। स च ज्ञातिभिः निषिद्धोऽपि पित्रोः सेवां समुत्सृज्य तपस्तप्तुं वनं जगाम। तपस्तपस्यतस् तस्य भूयान् कालोऽतीतः। कदाचित् तरुच्छायोपविष्टस्य तस्योपरि बलाकैका पुरीषमुत्ससर्ज। स च क्रुद्धस्तां ददर्श। दृष्टमात्रैव सा बलाका तपःप्रभावाद् भस्मसादभवत्। ततश्च स मुनिस्तपः प्रभावादहंकारं प्राप्तवान्। एकदासौ मुनिः क्वापि नगरे ब्राह्मणगृहमेकम् एत्य तद्गृहिणीं भिक्षामयाचत्। सा गृहिणी पतिव्रताऽऽसीत्। तया प्रोक्तम्—'प्रतीक्षस्व क्षणं यावद् भर्त्तुः परिचर्यां समापयामि' इति। ततश्च तं कोपदृष्ट्या वीक्षमाणं निरीक्ष्य सा विहस्य अभ्यभाषत—'मुने! नाहं

बलाकेति'। तदाकर्ण्य मुनिराश्चर्यं कुर्वन् समुपविश्य चिन्तयामास—"एतत् कथमिव ज्ञातमनया ?"

ततश्च सा साध्वी भर्त्तुः शुश्रूषां परिसमाप्य भैक्षमादाय मुनेरन्तिकमाजगाम। स च मुनिर्बद्धाञ्जलिस् तामवदत्—"कथं त्वया अनन्यगोचरो बलाकावृत्तान्तो ज्ञात इति ब्रूहि। ततो भिक्षां ग्रहीष्ये।" इति उक्तवन्तं तं मुनिं सोवाच—"मुने! न भर्तृसेवाया अपरं कञ्चन धर्मं करोम्यहम्। तेन प्रसादेन ममैतादृशं विज्ञानम्। किञ्च, धर्मव्याधाख्यं कञ्चन मांसविक्रयिणं गत्वा त्वमेतत् पृच्छ। ततस्ते श्रेयः। निरहङ्कारश्च तदा भविष्यसीति।" एवमभिहितः स मुनिस्तस्माद् गृहान्निरगात्।

अन्येद्युः स मुनिः समन्विष्य तं धर्मव्याधं विपणिस्थं मांसानि विक्रीणन्तम् उपागच्छत्। धर्मव्याधश्च दृष्ट्वैव तं मुनिमभाषत—"ब्रह्मन्! किं तया पतिव्रतया त्वमिह प्रेषितः ?" तदाकर्ण्य स मुनिर्विस्मितस्तं धर्मव्याधमवादीत्—'भद्र! मांसविक्रयिणस्ते कथमीदृशं विज्ञानम् ?' धर्मव्याधः प्रोवाच-'ब्रह्मन्! अहं मातापित्रोर्भक्तः। तौ हि मम परायणम्। तयोः स्नपितयोः स्नामि, भोजितयोर्भुञ्जे, शायितयोश्च शये। तेन च ममैतादृशं विज्ञानम्। अन्यहतानाञ्च मृगादीनां मांसानि स्वधर्म इति वृत्त्यर्थं न तु अर्थलालस्येन विक्रीणे। हे मुने! ज्ञानविघ्नमहङ्कारम् अहं सा च पतिव्रता नैव कुर्वः। तेनैव हेतुना आवयोरीदृशं निर्बाधं ज्ञानम्। त्वं च विलपन्तौ स्वपितृचरणौ परित्यज्य

अत्र तपसि निरतोऽसि, वृथाऽहङ्कारं च करोषि। तस्मात्त्वम् अहङ्कारं मुक्त्वा स्वधर्मं चर। तेनाशु परं श्रेयोऽवाप्स्यसीति।"

अथ स मुनिस्तस्य धर्मव्याधस्योपदेशं श्रुत्वा गृहमगात्, पित्रोः सेवां चानन्यभक्त्या अकरोत्, प्राप्तवांश्च परमां सिद्धिम्।

## अभ्यासार्थ प्रश्न

१. इस पाठ मे क्या शिक्षा मिलती है ? अपने शब्दों में लिखिए।

२. पतिव्रता स्त्री एवं मांस-विक्रेता धर्मव्याध भी तपस्वी मुनि से क्या श्रेष्ठ सिद्ध हुए ? समझाकर लिखिए।

३. 'गृहिणीं भिक्षामयाचत' में दो कर्म क्यों प्रयुक्त हुए है ? ऐसी अन्य क्रियाओं को भी देखिए जिनके दो कर्म होते हैं।

४. एत्य, कुर्व , परित्यज्य में जो धातुएँ प्रयुक्त हुई है उनके रूप लट, लोट् और विधिलिङ में चलाइए।

---

## एकोनविंशतितमः पाठः

# बुद्धस्योपदेशाः

[ **परिचय**—ये श्लोक बौद्ध-साहित्य के अनुपम ग्रन्थरत्न 'धम्मपद' से संकलित किए गए हैं। यह पाली भाषा में है और इसमें कई वर्ग ( वग्ग ) हैं। अत्यन्त सरल भाषा में सदाचार तथा शील-सम्बन्धी श्लोकों का इसमें संग्रह है। ये स्वयं भगवान् बुद्धदेव के वचन हैं। ]

नहिं वैरेण वैराणि शाम्यन्तीह कदाचन।
अवैरेण च शाम्यन्ति, एष धर्मः सनातनः ॥ १ ॥

अप्रमादेन मघवा देवानां श्रेष्ठतां गतः।
अप्रमादं प्रशंसन्ति प्रमादो गर्हितः सदा ॥ २ ॥

मध्विव मन्यते बालो यावत्पापं न पच्यते।
यदा च पच्यते पापम्, अथ दुःखं निगच्छति ॥ ३ ॥

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः।
चत्वार्येतानि वर्धन्ते आयुर्वर्णः सुखं बलम् ॥ ४ ॥

हीनं धर्मं न सेवेत, प्रमादेन न संवसेत्।
मिथ्यादृष्टिं न सेवेत, न स्यात् लोक-विवर्द्धनः ॥ ५ ॥

आरोग्यं परमो लाभः, सन्तुष्टिः परमं धनम् ।
विश्वासः परमा ज्ञातिः, निर्वाणं परमं सुखम् ॥ ६ ॥

कामतो जायते शोकः, कामतो जायते भयम् ।
कामतो विप्रमुक्तस्य नास्ति शोकः कुतो भयम् ॥ ७ ॥

तृष्णाया जायते शोकः, तृष्णाया जायते भयम् ।
तृष्णाया विप्रमुक्तस्य नास्ति शोकः कुतोभयम् ॥ ८ ॥

शीलदर्शनसम्पन्नं धर्मिष्ठं सत्यवादिनम् ।
आत्मनः कर्मकुर्वाणं तं जनः कुरुते प्रियम् ॥ ९ ॥

अक्रोधेन जयेत् क्रोधं, असाधुं साधुना जयेत् ।
जयेत् कदर्यं दानेन, सत्येनाऽलीकवादिनम् ॥१०॥

यस्मिन् सत्यं च धर्मश्चाहिंसा संयमो दमः ।
स वै वान्तमलो धीरः स्थविरश्चापि प्रोच्यते ॥११॥

धर्मारामो धर्मरतो धर्ममनुविचिन्तयन् ।
धर्ममनुस्मरन् भिक्षुः सद्धर्मान्न विहीयते ॥१२॥

यस्य कायेन वाचा मनसा नाऽस्ति दुष्कृतम् ।
संवृतञ्च त्रिभिः स्थानैः तमहं वच्मि ब्राह्मणम् ॥१३॥

न जटाभिर्न गोत्रैर्न जात्या भवति ब्राह्मणः ।
यस्मिन् सत्यं च धर्मश्च स शुचिः स च ब्राह्मणः ॥१४॥

आशा यस्य न विद्यन्ते इहलोके परत्र च ।
निराशयं विसंयुक्तं तमहं वच्मि ब्राह्मणम् ॥१५॥

# अभ्यासार्थ प्रश्न

१. यहाँ ब्राह्मण के क्या लक्षण बताए हैं ? लिखिए ।

२. वच्मि, विहीयते, निगच्छति के रूप लोट् तथा विधिलिङ् में चलाइए ।

३. स-विग्रह समास कीजिए और समास-नाम बताइए—

मिथ्यादृष्टि, शीलदर्शनसम्पन्न, धर्मारामः, धर्मरतः, गम्भीरप्रज्ञम्, निराशयम् ।

४. अलीकवादिन्, सत्यवादिन् शब्द किस प्रकार बने हैं ? इस प्रकार अन्य शब्द भी बनाकर उनका अभ्यास करिए ।

५. श्लोक नं० १, ७, ८, ६, एवं १० को कंठस्थ करिए ।

## विंशतितमः पाठः

# प्रमादं न सखे कुरु

[ परिचय—प्रस्तुत पाठ संस्कृत-साहित्य के प्रसिद्ध गद्य-लेखक 'बाणभट्ट' की "कादम्बरी" से लिया गया है। ईसा की सप्तम शताब्दी के पूर्वार्द्ध में विद्यमान् बाणभट्ट महाराज हर्षवर्धन की राजसभा के मुकुट-मणि थे। इन्होंने दो प्रसिद्ध गद्य-ग्रन्थ 'हर्षचरितम्' तथा 'कादम्बरी' लिखे हैं।

यहाँ पुण्डरीक और कपिञ्जल दो तपस्वी युवक मित्र हैं। तपस्वी होते हुए भी पुण्डरीक का मन सांसारिक भोगों के लिए चञ्चल हो उठता है। कपिञ्जल उसी को यह उपदेश दे रहा है। ]

सखे पुण्डरीक ! नैतदनुरूपं भवतः । क्षुद्र-जन-क्षुण्ण एष मार्गः । धैर्यधना हि साधवः । किं यः कश्चित्प्राकृत इव विक्लवीभवन्तम् आत्मानं न रुणत्सि । कुतस् तवापूर्वोऽयम् अद्य इन्द्रियोपप्लवो येनासि एवंकृतः । क्व ते तद्धैर्यम् । क्वासौ इन्द्रियजयः । क्व तद् वशित्वं चेतसः । क्व सा प्रशान्तिः । क्व तत्कुलक्रमागतं ब्रह्मचर्यम् । क्व सा सर्वविषयनिरुत्सुकता । क्व ते गुरुपदेशाः । क्व तानि श्रुतानि । क्व ता वैराग्यबुद्धयः । क्व तद् उपभोगविद्वेषित्वम् । क्व सा सुख-पराङ्मुखता । क्वासौ तपस्यभिनिवेशः । क्व भोगानामुपर्यरुचिः । क्व तत् यौवनानुशासनम् । सर्वथा निष्फला प्रज्ञा । निर्गुणो

धर्मशास्त्राभ्यासः । निरर्थकः संस्कारः । निरुपकारको गुरूपदेश-विवेकः । निष्प्रयोजना प्रबुद्धता । निष्कारणं ज्ञानम् । यदत्र भवादृशा अपि प्रमादैरभिभूयन्ते ।

अपि च केवलमिदमेव पृच्छामि । यदेतदारब्धं भवता किमिदं गुरुभिरुपदिष्टम् । उत धर्मशास्त्रेषु पठितम् । उत धर्मार्जनोपायोऽयम् । उत अपरस्तपसां प्रकारः । उत स्वर्गगमनमार्गोऽयम् । उत व्रतरहस्यमिदम् । उत मोक्षप्राप्तियुक्तिरियम् । आहोस्वित् अन्यो नियमप्रकारः । मूढो हि मदनेन आयास्यते । का वा सुखाशा साधुजननिन्दितेषु एवंविधेषु विषयेषु । कथं न निवारयसि उन्मार्गप्रस्थितानि इन्द्रियाणि । न नियमयसि क्षुभितं मनः । कोऽयं प्रमादो नाम । धैर्यमवलम्ब्य निर्भर्त्स्यतामयं दुराचारः ।

## अभ्यासार्थ प्रश्न

१. सविग्रह समास लिखिये और समास-नाम भी बताइये—

क्षुद्रजनक्षुण्णः, धैर्यधना, सुख-पराङ्मुखता, निष्प्रयोजना, उन्मार्गप्रस्थितानि।

२. रुणत्सि, लक्षयसि के रूप लोट् लकार में चलाइये ।

३ निष्फलीभवन्तम्, विद्वेषित्वम्, आयास्यते पर टिप्पणियां लिखिये ।

४. अर्थ लिखिये—

अभिनिवेश, उपप्लव, अभिभूयन्ते, क्षुभित, आयास्यते, क्षुण्ण ।

## एकविंशतितमः पाठः

# महात्मा गान्धी

[ भारत ने अनेक महापुरुषों को जन्म दिया है। इस २०वीं शताब्दी में सत्य और अहिंसा के अमोघ अस्त्रों से देश को स्वतन्त्र करनेवाले विश्व-वन्दनीय बापू का जीवन-चरित यहाँ दिया जा रहा है। ]

नास्ति कोऽपि भारतीयो यो नाम न जानाति प्रातः-स्मरणीयस्य महात्मनो गान्धिनो नाम। एष खलु महापुरुषो न केवलं भारतस्यैव हितमाचचार, अपितु विश्वस्यापि जगतः। एतस्योपकृतानि स्मारं-स्मारं सर्वोऽपि लोको भवति श्रद्धया-ऽवनतमूर्धा अस्य पुरतः। यद्यपि नास्ति साम्प्रतं महात्मा गान्धी अस्मिन्नश्वरे जगति भौतिकेन देहेन, किन्तु यशःशरीरेण स विद्यतेऽद्यापि, स्थास्यति च चिरम्। एतस्याऽऽदर्शभूतं जीवनमद्यापि न केवलं कोटिशो भारतीयानाम्, अपितु विश्वस्य जगतः प्राणिनां मार्ग-प्रदर्शनं कुरुते। अतएव एष विश्ववन्दनीयो जातः। सत्यम्, अहिंसा, लोकसेवा च रत्नत्रयमस्य जीवनस्य प्रधानमुद्देश्यमासीत्। एतत्त्रयस्योपासनादेव एष महात्मा जातः।

महापुरुषस्यास्य जन्म १८६९ तमे ईसवीयाब्दे अक्टूबर मासस्य द्वितीये दिवसे काठियावाड़ प्रान्तस्य पोरबन्दराभिधे

नगरेऽभूत् । अस्य पिता नाम्ना श्री 'कर्मचन्द गान्धी' माता च सती पुत्तली आसीत् । पिता अस्य 'मोहनदास' इत्यन्वर्थं नाम चकार । सप्तवर्षाणि यावदसौ पोरबन्दरे एव शिक्षामग्रहीत् । पितरि राजकोट राज्ये अमात्ये जाते सति असावपि तत्रैव एकस्मिन् विद्यालयेऽध्ययनं प्रारभत. प्रवेशिका-परीक्षामुत्तीर्य भावनगरे साँवलदास महाविद्यालये च प्रवेशं प्राप । तस्मिन्नेव काले च सच्चरित्रां गुणगणैर्विभूषितां कस्तूरबाभिधामेकां बाला-मुपयेमे । ततः स विधानशास्त्रस्याऽध्ययनाय 'इग्लैण्ड' देशे जगाम । तत्र गमनात्प्राक् मातुरादेशप्राप्त्यर्थं प्रतिज्ञात्रयमकरोत् । तद्यथा—

(१) नाहं कदापि मदिरां सेविष्ये ।

(२) नाहं मांसस्पर्शमपि विधास्यामि ।

(३) पूर्णरूपेण ब्रह्मचर्यव्रतमाचरिष्यामि । इति ।

स्वप्रतिज्ञातं पालयन् श्री मोहनदास गान्धी 'लन्दन' नगरे त्रीणि वर्षाणि व्यवहारशास्त्रमधीत्य स्वदेशमाजगाम । आगत्य च मुम्बापुर्यां विधानविषया वृत्तिं प्रारभत । शीघ्रमेव दक्षिणा-फ्रीका देशस्थेन व्यापारि-संघेनाहूतः स नेटाल-नगरं जगाम ।

तत्रत्यानां भारतीयानां यूरोपीयैः कृतां दुर्दशां विलोक्य दयार्द्रहृदयस् तेषां समुद्धाराय मतिं कृतवान् । अफ्रीका देश-निवासिनः सर्वान् भारतीयान् संघटयितुञ्च नेटाल-देशे 'इण्डियन काँग्रेस' नाम्नी महापरिषदं स्थापयामास । तत्रैव च भारतीयानां

यूरोपीयैः सह संघर्षे अहिंसा प्रधानं सत्याग्रहनामकम् अमोघमस्त्र प्रयुक्तं विजयार्थं सर्वप्रथमम् अनेन। तस्यास्त्रस्य अफ्रीकादेशे साफल्यमनुभूय भारत प्रत्यागतः।

अत्रापि स महात्मा भारतस्य स्वतन्त्रताप्राप्त्यै विदेशिनां भारतस्य परित्यागाय च इदमेव शस्त्रं मुहुर्मुहुः प्रायुङ्क्त। जातं च भारतमन्तेऽहिंसा-प्रधानेन अनेनैव शस्त्रेण स्वतन्त्रं १९४६ तमेऽब्दे इति।

न केवलमयं भारतं स्वतन्त्रमेव व्यधात्, अपितु भारतस्य निर्माणमप्य करोत्। स्वदेश-वस्तूनां प्रचारः, अस्पृश्यतायाः उन्मूलनम्, ग्रामोद्योगानां समुज्जीवनम्, मादक-वस्तूना सर्वथा निषेधः, राष्ट्रभाषायाः प्रचारः, भारतीय-संस्कृतेः पुनरुद्धारश्च तस्य राष्ट्रनिर्माणकार्याण्येव आसन्।

अनेन महात्मना शैशवे एव सत्य हरिश्चन्द्रस्याऽभिनयात् सत्यनिष्ठायाः, श्रवणकुमारस्य चाभिनयात् पितृभक्तेः शिक्षा गृहीता। बाल्ये एव मानवस्य निर्माणं भवति। तदानीतनाः संस्कारा यावज्जीवं मानवे तिष्ठन्ति। उक्तञ्च—

'यन्नेव भाजने लग्नः संस्कारो नान्यथा भवेत्।' इति।

एष महात्मा आत्म-चरित्र-निर्माणे परम सावधान आसीत्। आसीच्च अस्य ईश्वरेऽपूर्वो विश्वासः। स ईश्वरस्य वास्तविकोऽनन्य-समुपासक इत्यत्र न कस्यापि विप्रतिपत्तिः। न स तत्प्रेरणा-मन्तरा किमपि कार्यं कुरुते स्म।

अहो ! धन्योऽयं महात्मा यो यावज्जीवं मानवसेवाव्रत-माचरन्, अन्ते तदर्थमेव स्वान् प्राणान् जुहाव। एतादृशानेव महापुरुषानुद्दिश्य कस्यचित् कवेरियमुक्तिः—

परोपकारैकधियः स्व-सुखाय गतस्पृहाः।
जगद्धिताय जायन्ते मानवाः केऽपि भूतले॥ इति।

## अभ्यासार्थ प्रश्न

१ इंगलैण्ड जाते समय महात्मा गान्धी ने कौनसी तीन प्रतिज्ञाएं की थीं ?

२. महात्मा गांधी के चरित्र-निर्माण में किसका सबसे अधिक प्रभाव पड़ा है ?

३. महात्मा गांधीके राष्ट्र-निर्माण के कौनसे कार्यक्रम थे ? लिखिए।

४. पाठ के प्रथम वाक्य में 'नाम' शब्द का दोबारा प्रयोग किन अर्थों में हुआ है ?

५. व्याकरण-सम्बन्धी नोट लिखिए—
स्मारं-स्मारं, यावज्जीवं, तत्रागतानाः, तत्रत्याना, तत्पेरणामन्तरा, गतस्पृहा.।

## द्वाविंशतितमः पाठः

# विदुलायाः वीरवचनानि

[ ये श्लोक महाभारत उद्योग पर्व अध्याय १३३-१३६ से संकलित किये गये हैं। सिन्धुराज द्वारा पराजित, हतोत्साह एवं निष्क्रिय अपने पुत्र संजय को यहाँ उसकी वीर माता विदुला भर्त्सना दे रही है। भगवान् वेदव्यास ने अपने इस अनुपम महाकाव्य में हमारे राष्ट्र की विचारधारा को मुखरित किया है। ]

विदुला विदुषी माता धर्मज्ञा दूरदर्शिनी।
एवं न्यबोधयत्पुत्रं कातरं शत्रुभिर्जितम् ॥ १॥

अनन्दन ! महाजात ! शत्रूणां हर्षवर्धन।
जातो मया न पित्रा च वद त्वं कुत आगतः ॥ २॥

उत्तिष्ठ रे ! कापुरुष ! मा शेष्वैवं पराजितः।
शत्रूनानन्दयन् सर्वान् निर्मानो बन्धुशोकदः ॥ ३॥

चरित्रं नैव गायन्ति मानवा यस्य चाद्भुतम्।
संख्यापूरणमात्रं स नैव स्त्री न पुनः पुमान् ॥ ॥ ४॥

दाने तपसि शौर्ये च प्रसिद्धं यस्य नो यशः।
विद्यायामर्थलाभे च मातुस्तु मलमेव सः ॥ ५॥

विद्यया यशसा वापिश्रिया शौर्येण वा पुनः।
जनान्योऽभिभवत्यन्यान कर्मणा सोऽत्र वै पुमान् ॥ ६॥

निरमर्षं, निरुत्साहं, निर्बलं शत्रुनन्दनम् ।
मा सौभाग्यवती काचिज्जनयेत्पुत्रमीदृशम् ॥ ७ ॥

एतावानेव पुरुषो यदमर्षी यदक्षमी ।
क्षमावान् निरमर्षश्च नैव स्त्री न पुनः पुमान ॥ ८ ॥

त्वं पराजय पापेभ्यो मोचयात्मानमात्मना ।
लोहस्य हृदयं कृत्वा मृगयस्व पुनः सुखम् ॥ ९ ॥

परं विषहते यस्मात्तस्मात् पुरुष उच्यते ।
तमाहुर्व्यर्थनामानं स्त्रीवद् य इह जीवति ॥१०॥

यस्य शूरस्य विक्रान्तैर्लभन्ते मानवाः सुखम् ।
इन्द्रस्य च यथा देवाः धन्यं लभ्येह जीवनम् ॥११॥

सञ्जयो नामतश्च त्वं नार्थतो दृश्यते मया ।
अन्वर्थनामा भव मे पुत्रो मा व्यर्थनामकः ॥१२॥

वयमाश्रयणीयाः स्म न श्रोतारः परस्य च ।
साऽन्यमासाद्य जीवन्ती परित्यक्ष्यामि जीवितम् ॥ १३ ॥

अपारे भव नः पारं अप्लवे भव न प्लवः ।
कुरुष्व स्थानमस्थाने मृतान् संजीवयस्व नः ॥१४॥

नास्मिञ्जातु कुले जातो गच्छेद्योऽन्यस्य पृष्ठतः ।
न त्वं परस्यानुचरस्तात जीवितुमर्हसि ॥१५॥

अकुर्वन्तो हि कर्माणि कुर्वन्तो निन्दितानि च ।
सुखं नैवेह नामुत्र लभन्ते पुरुषाधमाः ॥१६॥

अहं त्वां पूजयिष्यामि जयं लब्ध्वा समागतम्।
कृत्वा क्रूरमिवात्मानं जयायोत्तिष्ठ सञ्जय ॥१७॥

उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु।
भविष्यतीत्येव मनः कृत्वा सततमव्यथैः ॥१८॥

तस्यास्त्वीदृशकं वाक्यं श्रुत्वाऽपि स्वल्पचेतसः।
तमस्त्वपागमत्तस्य सुविचित्रार्थपदाक्षरम् ॥१९॥

## अभ्यासार्थ प्रश्न

१. इस संवाद के अनुसार पुरुष का वास्तविक लक्षण क्या है ?

२. विदुला की इस भर्त्सना का उसके पुत्र सञ्जय पर क्या प्रभाव पड़ा ?

३. 'अन्वर्थनामा भव' से क्या तात्पर्य है ?

४. अर्थ लिखिए—

सख्यापूरणमात्र, मातुस्तु मलमेव।

५. 'वयमाश्रयणीयाः स्म न श्रोतारः परस्य च' के भाव को छोटे-से लेख द्वारा स्पष्ट कीजिये।

## त्रयोविंशतितमः पाठः

# दिलीपस्य नन्दिनीसेवा

[ परिचय--प्रस्तुत पाठ महाकवि कालिदास विरचित 'रघुवंश' महाकाव्य के द्वितीय सर्ग पर आधारित है। कालिदास संस्कृत-साहित्य के अनुपम रत्न हैं। इन्होंने 'मालविकाग्निमित्र', 'विक्रमोर्वशीय' तथा 'अभिज्ञानशाकुन्तल' नामक तीन नाटक, 'रघुवंश' एवं 'कुमारसंभव' नामक दो महाकाव्य और 'मेघदूत' एवं 'ऋतुसंहार' नाम के दो गीति-काव्य लिखे हैं। इनके ग्रंथ भारतीय संस्कृति में ओत-प्रोत हैं। भारतीय संस्कृति में गौ का प्रमुख स्थान है। यहाँ पर गाय की रक्षा के लिए अपने प्राणों का बलि देनेवाले राजा दिलीप का चरित्र अंकित किया गया है। ]

आसीत्पुरा इक्ष्वाकुवंशीयो दिलीपो नाम यशस्वी राजा। स अनपत्यतया अतीव दुःखितः सन् कुलगुरोः वसिष्ठस्याश्रमं जगाम। तस्यादेशेन च सन्तानार्थं कामधेनु-सुतायाः नन्दिन्याः सेवापरोऽभवत्। स प्रातरुत्थाय तस्याः नन्दिन्याः पूजां विधाय वने तामनुगच्छति स्म। सायं वनात् प्रत्यावृत्य, सान्ध्यं विधिं समाप्य, सदारस्य गुरोः पादौ च निपीड्य, दोहावसाने निषण्णां तां पुनः पर्यचरत्। अनेन प्रकारेण सन्तानार्थं नन्दिनीं सेवमानस्य तस्यैकविंशतिदिनानि व्यतीतानि। ततोऽन्येद्युः तस्य नृपस्य भक्तिं परीक्षमाणा सा हिमालयस्य कन्दरां प्राविशत्। राजा च तदानीम् अद्रिशोभावलोकनपर आसीत्। सहसा

धेनोराक्रन्दनम् आकर्ण्य, यावत् स तत्र दृष्टिं ददाति तावत् स तस्यां प्रहरन्तमेकं सिंहं ददर्श। शरण्यः स राजा द्रुतमेव तस्य मृगेन्द्रस्य वधाय निषङ्गात् शरमुद्धर्तुम् ऐच्छत्। परमाश्चर्यम्! तदानीं तस्य करः सायकपुङ्खे एव निषक्त आसीत्। एतस्मात् विस्मितं तं नृपं वीक्ष्य सिंहो मनुष्यवाचा उवाच— 'भो महीपाल! अलं तव श्रमेण, अहं हि कुम्भोदरो नाम भगवतो देवदेवस्य शिवस्य सेवकोऽस्मि। गौर्या पुत्रीकृतस्यास्य देवदारोः रक्षार्थमहमत्र नियुक्तः। भगवतो महादेवस्यानुग्रहेण मया एषा धेनुरासादिता। शिवस्यानुग्रहान्न कोऽपि मां हन्तुं समर्थः। अतस्त्वं लज्जां विहाय निवर्तस्व, भवता गुरोर्भक्तिः दर्शिता।'

तस्यैतद्वचनं श्रुत्वा राजा प्रत्युवाच—'भो मृगेन्द्र! भगवान् महादेवो मे मान्यः, परं गुरोः होमसाधनं इयं धेनुरपि मे रक्षणीया, अतस्त्वं मदीयेन शरीरेण स्वक्षुधं शमय। मुनेरिमां होमधेनुं च विसृज।"

एतच्छ्रुत्वा सिंहः पुनर्जगाद—'राजन्! जगतः एकच्छत्रं राज्यं, नवं वयः, इदं कान्तं शरीरं चाल्पेन हेतुना मा त्यज। एवं कुर्वन् त्वं विचारमूढः प्रतिभासि। यदि त्वं गुरोः कोपाद् बिभेषि, तर्हि सोऽपि कोटिशः धेनूनां प्रदानेन दूरीकर्तुं शक्यः। अतो विरम, अस्मात् साहसात्। रक्ष स्वशरीरं, पालय प्रजाः, अनुभव च समृद्धं राज्यम्।" सिंहस्य वाचं निशम्य नरनाथो दिलीपः प्रत्युवाच—'विपन्नत्राणं हि क्षत्रियस्य परमो धर्मः।

तं विहाय किं मे जीवितेन, राज्येन च। अतः यदि त्वं मयि दयालुरसि, तर्हि मे यशःशरीरं रक्ष, न भौतिकं शरीरम्। यशोधनानां मादृशां न भौतिकेषु शरीरेषु आस्था खलु।' इत्युक्त्वा स नृपः स्वशरीरं मांसपिण्डमिव सिंहाय समर्पितवान्। तदवस्थं तमवलोक्य नन्दिनी उवाच—'उत्तिष्ठ सौम्य! मया मायामुद्भाव्य त्वं परीक्षितोऽसि। अहं ते प्रीताऽस्मि। मदीयं पयः पत्रपुटे दुग्ध्वा पिब। वंशस्य कर्त्तारम्, अनन्त-कीर्तिं तनयं च लभस्व' इति।

अहो! प्रशस्यं गोराराधनम्।

## अभ्यासार्थ प्रश्न

१ इस पाठ से क्या शिक्षा मिलती है?

२. सन्तान-हीन राजा दिलीप को गुरु वसिष्ठ ने सन्तान प्राप्ति के लिए क्या उपाय बताया?

३. राजा दिलीप के चरित्र की विशेषताओं पर प्रकाश डालिए।

४. 'अलं तव श्रमेण' से क्या तात्पर्य है? यहाँ श्रमेण में तृतीया विभक्ति का क्यों प्रयोग हुआ है?

५. सेवमान, परीक्षमाणा शब्द किस प्रकार बने है और इसी प्रकार अन्य शब्द भी बनाइए।

६ यशोधनानाम्, अनन्तकीर्ति का सविग्रह समास बनाइए।

## चतुर्विंशतितमः पाठः

# राजस्थानम्

[ परिचय—यों तो राजस्थान की भूमि का चप्पा-चप्पा ऐतिहासिक घटनाओं का साकार रूप है, परन्तु प्रस्तुत पाठ में केवल कुछ ही ऐतिहासिक नगरों का वर्णन किया गया है। इस प्रसंग में कृष्णभक्तिपरायणा मीरा की जन्मभूमि और नीति, वैराग्य तथा शृंगार शतक के रचयिता महात्मा भर्तृहरि की जन्मभूमि का भी वर्णन हुआ है। ]

एते वयं राजस्थानं प्राप्ताः। एषा हि वीरप्रसविनी मेवाड़भूमिः। इयं खलु कौस्तुभमणिरिव राजते राष्ट्रवक्षःस्थले। कामं कालक्रमेण मन्दतामुपगता भवेत् अस्याः यशश्चन्द्रिका, परमस्याः भग्नावशेषाणां दर्शनेन प्रत्यक्षीभवति राष्ट्रगौरवमद्यापि। एषा खलु राष्ट्रभक्त-शिरोमणेः महाराणा प्रतापस्य चरणस्पर्शपूता पर्वतश्रेणी अद्यापि स्फूर्तिं प्रयच्छति देशवासिभ्यः। एष निर्झर कल-कलः इदानीमपि वीरगाथामिव गायन् प्रतीयते!

अहो! एषा हल्दीघाटी। शत्रूणां रक्तेन सिक्तामिमां रणस्थलीं मेघा अपि सङ्कुचन्ति सेक्तुं जलेन। इमास्ता गिरिकन्दराः यासु विपत्तिकाले उषितं चिरं वीरेण प्रतापेन। अहो! केसरिणोऽपि अत्र सविनयं प्रविशन्ति निवसन्ति च।

हा ! हन्त ! अत्रैव विडालेन अपहृते आहारकवले रुदितमासीत् प्रतापकन्यया। धन्योऽसौ वीरः, धन्या च सा वीराङ्गना प्रतापमहिषी, या विविधानि कष्टानि सहमानाऽपि धैर्यान्न चचाल। अग्रत्यं प्रसिद्धं चित्तौड़दुर्गं कस्य चेतसि वीररसं न सञ्चारयति। कीदृशी पुण्यतमा इयं भूमिः। नापकर्षति अस्माच्चित्तम्, तथापि सम्प्रति अन्यतो व्रजामः।

एष बालुकामयो मारवाड़प्रदेशः। अहो ! अत्र रजसः प्रत्येक कणः सूर्य ज्योतिरिव प्रकाशते। अनेनैव मरुस्थलेन सोमनाथ ध्वंसाय गच्छतां यवनानां महती सेना एकस्मिन्नेव ग्रासे कवलिता आसीत्। अत्रैव वीर दुर्गादासेन—'राष्ट्ररक्षणाय मानवशक्तेः परा देवशक्तिः' इति अखण्डशक्ति-प्रदायिनी भगवती दुर्गाराधिता। लब्धा चाप्रतिहता शक्तिः। यस्याः शस्त्र पूजा शत्रूणां शोणितेनैव अभवत्, न तु कुंकुमेन। अनेके अत्र संजाताः वीराः ये धर्मरक्षणाय प्राणान् प्रदाय स्वर्गं गताः। धन्योऽयं प्रदेशः, धन्यास्ते पुण्यश्लोकाः वीराः। अस्तु चामुण्डा-दर्शनं कृत्वा अन्यतो गच्छामः। अम्ब ! मातः ! प्रदर्शय पन्थानम्, त्वां बिना कः खलु अस्मानुद्धरिष्यति। भगवति, वन्दे।

एषा राजस्थानस्याभिनवा राजधानी जयपुर-नगरी। अस्याः प्राच्यां दिशि विराजते गालवाश्रम नामकं तीर्थस्थानम्, उत्तरस्यांच सा प्राचीना राजधानी आमेरनगरी, या परितः पर्वतश्रेणिभिरावृता, यस्यां च विराजते सा प्रसिद्धा शिलादेवी,

ग्रामाराध्य मानसिंहः परैरजय्यमपि काबुलनगरं विजितवान्। दक्षिणस्यां चास्याः वर्तते प्रसिद्धमैतिहासिकं सांगानेर नगरम्। स्वयं चैषा सुन्दरैः राजपथैः, भव्यैः प्रासादैः रम्यैश्चारामैः अलङ्कृता। अमरावतीसमा इयं राजधानी कस्य मनो न हरति।

इदानीं गन्तव्यमन्यत्र। इतस्तावत् किमिदं विस्तृतं पर्वतमध्ये दुर्गाकारं वस्तु दृश्यते। अहो! एतत् 'रणथम्भोर' नामकं दुर्गं विद्यते। एतत्तदेव ऐतिहासिकं दुर्गं यत्र महाराणा हम्मीरसिंहः अलाउद्दीन खिलजी नामधेयं यवनसम्राजं युद्धे पराजितवान्। सप्तभिः पर्वतमयैः प्राकारैः परिवृतं विशालं सुदृढं रम्यं चैतद् दुर्गं कस्य चित्तं न रञ्जयति।

अहो! किमेतत् स्थानं यस्य दर्शनेनैव चेतसि विचित्रा शान्तिरुदेति। सत्यम्, इयं खलु मत्स्य प्रदेशे (अलवरे) विद्यमाना यतिवरस्य भर्तृहरेस् तपोभूमिः। यत्र रात्रिन्दिवं हरिं चिन्तयत एव तस्य दिनानि व्यतियन्ति स्म। उक्तञ्च तेन महात्मना स्वयमेव—

> अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा,
> मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा।
> तृणे वा स्त्रैणे वा मम समदृशोयान्ति दिवसाः,
> कचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः॥

अतः कथं नात्र शान्तिरुदियात्, कथञ्च मनसो विकारा न नश्येयुः।

आः दृष्टं सर्वं राजस्थानम्, किन्तु कथं विस्मृता सा मारवाड़-प्रदेशान्तर्गता मेड़तानगरी यां भक्तिशिरोमणि स्त्रीरत्नं श्री 'मीराबाई' स्व जन्मना कृतार्थयामास। अथवा भक्तिरसे आत्मानमवगाहितुम् अन्ते एव सा दर्शनमर्हति, इति युक्तमेव जातं पूर्वं तद्विस्मरणम्। विरमाम इदानीं पाठकान् भक्तिरसामृतपानपरायणान् कृत्वा। शिवमस्तु वः।

## अभ्यासार्थ प्रश्न

१. हल्दीघाटी की ऐतिहासिक प्रसिद्धि के विषय में आप क्या जानते हैं ?

२. दुर्गादास, मानसिंह तथा हम्मीरसिंह ने राजस्थान के इतिहास में जो योग दिया, उसे वर्णन करिए।

३. निम्न शब्दों पर व्याकरण-सम्बन्धी टिप्पणियां लिखिए:—
रात्रिन्दिव, प्रत्यक्षीभवति, उषितं, चिन्तयन, अवगाहितुम्।

## पञ्चविंशतितमः पाठः

# नीति-श्लोकाः

[ नीति के श्लोक विभिन्न पुस्तकों से संकलित किए गए हैं। इनमें रात-दिन जीवन में काम आनेवाली व्यावहारिक नीति का निरूपण हुआ है। ]

सदयं हृदयं यस्य भाषितं सत्यभूषितम् ।
कायः परहिते यस्य सफलं तस्य जीवितम् ॥ १ ॥

चिन्तनीया हि विपदामादावेव प्रतिक्रिया ।
न कूपखननं युक्तं प्रदीप्ते वन्हिना गृहे ॥ २ ॥

अवृत्तिकं त्यजेद्देशं वृत्तिं सोपद्रवां त्यजेत् ।
त्यजेत् मायाविनं मित्रं धनं प्राणहरं त्यजेत् ॥ ३ ॥

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ ४ ॥

जीवन्तोऽपि मृताः पञ्च व्यासेन परिकीर्तिता ।
दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥ ५ ॥

दुर्जनः परिहर्तव्यो विद्ययाऽलङ्कृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥ ६ ॥

को न याति वशं लोके मुखे पिण्डेन पूरितः ।
मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥ ७ ॥

खलस्य कण्टकस्येव द्विविधैव प्रतिक्रिया ।
उपानहा वक्त्रभङ्गो वा दूरतो वा विवर्जनम् ॥ ८ ॥

क्षमाखड्गः करे यस्य दुर्जनः किं करिष्यति ।
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥ ९ ॥

न स्वल्पस्यकृते भूरि नाशयेन्मतिमान्नरः ।
एतदेव हि पाण्डित्यम्, न स्वल्पाद् भूरि नाशनम् ॥ १० ॥

यावत्स्वस्थमिदं देहं यावन्मृत्युश्च दूरतः ।
तावदात्महितं कुर्यात् प्राणान्ते किं करिष्यसि ॥ ११ ॥

मनसा चिन्तितं कर्म वचसा न प्रकाशयेत् ।
अन्य लक्षित कार्यस्य यतः सिद्धिर्न जायते ॥ १२ ॥

कुदेशञ्च कुवृत्तिञ्च कुभार्यां कुनदीं तथा ।
कुद्रव्यञ्च कुभोज्यञ्च वर्जयेत्तु विचक्षणः ॥ १३ ॥

यस्यास्ति वित्तं स नरः कुलीनः,
स पण्डितः स श्रुतवान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः,
सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ १४ ॥

प्रारभ्यते न खलु विघ्नभयेन नीचैः,
प्रारभ्य विघ्नविहिता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः,
प्रारभ्य चोत्तमजना न परित्यजन्ति ॥ १५ ॥

विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ,
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ १६ ॥

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु,
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा,
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ १७ ॥

आरम्भगुर्वी क्षयिणी क्रमेण,
लघ्वी पुरा वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्द्धपरार्द्धभिन्ना
छायेव मैत्री खलुसज्जनानाम् ॥ १८ ॥

श्रोत्रं श्रुतेनैव न कुण्डलेन
दानेन पाणिर्न तु कङ्कणेन ।
विभाति कायः करुणापराणाम्,
परोपकारेर्न तु चन्दनेन ॥ १९ ॥

त्याज्यं न धैर्यं विधुरेऽपि काले,
धैर्यात्कदाचिद् गतिमाप्नुयात्सः ।
यथा समुद्रेऽपि च पोतभङ्गे
सायांत्रिको वाञ्छति तर्तुमेव ॥ २० ॥

## अभ्यासार्थ प्रश्न

१. श्वास के द्वारा जीते हुए भी मृतक-तुल्य कौन बताए गए हैं ?

२. श्लोक नं० ७ का भाव स्पष्ट करिए ।

३. गुर्वी तथा लघ्वी शब्द किस प्रकार बने हैं ? लिखिए ।

४. शब्दार्थ बताइए—

सांयात्रिकः, सदसि, विरमन्ति, विहङ्गमाः, तिर्यञ्चः, प्रतिक्रिया ।

## षड्विंशतितमः पाठः

# विश्वासघातस्य फलम्

[ प्रस्तुत पाठ भी 'पञ्चतन्त्र' से लिया गया है, जिसका परिचय नवम पाठ में दिया जा चुका है। विश्वासघात, छल एवं प्रवचना के आचरण से मनुष्य की क्या दशा होती है—यही पापबुद्धि एवं धर्मबुद्धि की कहानी द्वारा यहाँ दिखाया गया है। ]

एकस्मिन् ग्रामे धर्मबुद्धिः पापबुद्धिश्च द्वे मित्रे प्रतिवसतः स्म। अथ कदाचित् पापबुद्धिना चिन्तितम्—"अहं तावन्मूर्खः, निर्धनश्च। तदेनं धर्मबुद्धिमादाय देशान्तरं गत्वा अस्याश्रयेण अर्थोपार्जनं कृत्वा एनमपि वंचयित्वा सुखीभवामि।' अथ अन्यस्मिन्नहनि पापबुद्धिः धर्मबुद्धिं प्राह—'भो मित्र! अस्यामवस्थायां देशान्तरमदृष्ट्वा वार्द्धकभावे कां शिशुजनस्य वार्तां कथयिष्यसि? उक्तञ्च—

विद्यां वित्तं शिल्पं तावन्नाप्नोति मानवः सम्यक्।
यावत् व्रजति न भूमौ देशाद्देशान्तरं हृष्टः॥ १॥

अथ तस्य तद्वचनमाकर्ण्य प्रहृष्टमना धर्मबुद्धिः तेनैव सह देशान्तरं प्रस्थितः। तत्र च धर्मबुद्धिप्रभावेण भ्रमता पापबुद्धिना प्रभूततरं वित्तमासादितम्। ततश्च तौ स्वगृहं प्रतिनिवृत्तौ। अथ

स्वस्थानसमीपवर्तिना पापबुद्धिना धर्मबुद्धिः अभिहितः—'मित्र ! न सर्वमपि एतद् धनं गृहं प्रति नेतव्यम् । यतः कुटुम्बिनो बान्धवाश्च प्रार्थयिष्यन्ते । तदत्रैव वनगहने क्वापि भूमौ निक्षिप्य किञ्चिन्मात्रमादाय गृहं प्रविशावः, भूयोऽपि प्रयोजने सञ्जाते स्थानादस्मात् नेष्यावः । तदाकर्ण्य धर्मबुद्धिराह—'भद्र ! एवं क्रियताम् ।' तथा कृते द्वावपि तौ स्वगृहं गत्वा सुखेन स्थितवन्तौ ।

अथ अन्यस्मिन्नहनि पापबुद्धिः रात्रिकाले वनं गत्वा तत्सर्वं धनं समादाय गर्तं पूरयित्वा स्वभवनं जगाम । अथ अन्येद्युः स धर्मबुद्धिं समभ्येत्य प्रोवाच—'मित्र ! बहुकुटुम्बा वयं वित्ताभावात् सीदामः, तद्गत्वा तत्र स्थाने किञ्चिन्मात्रं धनमानयावः ।' सोऽब्रवीत्–'भद्र ! एवं क्रियताम् ।' अथ द्वावपि गत्वा तत्स्थानं यावत् खनतः, तावत् रिक्तं भाण्डं दृष्टवन्तौ । अत्रान्तरे पापबुद्धिः शिरस्ताडयन् प्रोवाच—'भो धर्मबुद्धे ! त्वया हृतमेतद्धनं, नान्येन, यतो भूयोऽपि गर्तापूरणं कृतं, तत् प्रयच्छ मे तस्यार्धम्, अन्यथा अहं राजकुले निवेदयिष्यामि ।' स आह–'भो दुरात्मन् ! मैवं वद, धर्मबुद्धिः खल्वहम्, न एतच्चौरकर्म करोमि । उक्तञ्च—

मातृवत् परदारेषु परद्रव्येषु लोष्टवत् ।
आत्मवत् सर्वभूतेषु वीक्षन्ते धर्मबुद्धयः ॥ २ ॥

एवं द्वावपि तौ विवदमानौ धर्माधिकरणं गतौ, प्रोचतुश्च परस्परं दूषयन्तौ । अथ धर्माधिकरणाऽधिष्ठितपुरुषैः तौ दिव्यार्थं

नियोजितौ। परं पापबुद्धिः प्राह—'अहो! न सम्यग् दृष्टोऽयं न्यायः। अस्ति अस्मिन् विषये मम वृक्षदेवताः साक्षिभूताः, ता-अप्यावयोः एकतरं चौरं साधुं वा करिष्यन्ति।' अथ तैः सर्वैरभिहितम्—'भोः! युक्तमुक्तं भवता। अस्माकमपि अस्मिन् विषये महत् कौतूहलं वर्तते। प्रभातकाले युवाभ्यामपि अस्माभिः सह तत्र वनोद्देशे गन्तव्यम्' इति। एतस्मिन्नन्तरे पापबुद्धिः स्वगृहं गत्वा स्वजनकमुवाच—'तात! प्रभूतोऽयं मयाऽर्थो धर्मबुद्धेश्चोरितः, स च तव वचनेन अस्मदधीनो भवति, अन्यथा अस्माकं प्राणैः सह यास्यति।' स आह—'वत्स! द्रुतं वद, येन प्रोच्य तद् द्रव्यं स्थिरतां नयामि।' पापबुद्धिः आह—'तात! अस्ति तत्प्रदेशे महान् शमीवृक्षः, तस्मिन् महत्कोटरमस्ति, तत्र त्वं साम्प्रतमेव प्रविश। ततः प्रभाते मया पृष्टे सति त्वया वाच्यं यत्—'धर्मबुद्धिः चौरः' इति। तथा कृते प्रत्यूषे पापबुद्धिः स्नात्वा शुभवसनो धर्माधिकरणैः सह तां शमीमभ्येत्य तारस्वरेण प्रोवाच—'भगवति वनदेवते! आवयोर्मध्ये यश्चौरस् तं कथय।' अथ पापबुद्धि पिता शमीकोटरस्थः प्रोवाच—'भोः! शृणुत, शृणुत, धर्मबुद्धिना अपहृतमेतद्धनम्।' तदाकर्ण्य सर्वे ते राज-पुरुषा विस्मयोत्फुल्ललोचना यावद्धर्मबुद्धेः वित्तहरणोचितं निग्रहं शास्त्रदृष्ट्या अवलोकयन्ति, तावद्धर्मबुद्धिना तच्छमीकोटरं वह्निभोज्यद्रव्यैः परिवेष्ट्य वह्निना सन्दीपितम्।

अथ ज्वलति तस्मिन् शमीकोटरे अर्द्धदग्धशरीरः पापबुद्धि पिता निश्चक्राम। ततश्च तैः सर्वैः पृष्टः—'भोः! किमिदम्?' इत्युक्ते स पापबुद्धि-विचेष्टितं सर्वमिदं निवेद्य मृतः। अथ ते राज-

पुरुषाः पापबुद्धिं शमीशाखायां प्रतिलम्ब्य धर्मबुद्धिं प्रशस्य स्व-स्थानं गताः। सत्यमभिहितम्—

नाऽत्यन्तनिकृतिप्रज्ञो निकृत्या सुखमेधते।
स नश्यति तया पापः पापबुद्धिः स्वयं यथा॥ ३॥

## अभ्यासार्थ प्रश्न

१. पापबुद्धि ने धर्मबुद्धि को किस प्रकार ठगना चाहा और उसका अन्तिम परिणाम क्या निकला ? इसे स्वरचित संस्कृत में लिखिए।

२—अर्थ लिखिए—

निकृतिप्रज्ञः, निकृत्या, सोदाम, शमीकोटरस्थ।

३—सन्धि-विच्छेद कीजिए—

तच्छमीकोटरं, विस्मयोत्फुल्ललोचनाः, तावन्मूर्खः, देशाद्देशान्तरं।

४—'ज्वलति तस्मिन् शमीकोटरे' में सप्तमी विभक्ति का प्रयोग क्यों हुआ है ?

## सप्तविंशतितमः पाठः

# परार्थं जीवितं सताम्

[ परिचय—यह अवतरण 'हर्षवर्धन' रचित 'नागानन्द' नाटक से लिया गया है। महाराज प्रभाकरवर्धन के कनिष्ठ पुत्र प्रसिद्ध हिन्दू सम्राट् महाराज हर्षवर्धन ने तीन नाटक—'रत्नावली', 'प्रियदर्शिका' एवं 'नागानन्द' लिखे। बाणभट्ट, मयूरभट्ट और दिवाकर इनकी सभा को शोभित करते थे। इनका राज्य-काल ६०६ से ६४८ ई० था।

यहाँ शंखचूड के लिए अपने प्राणों की बलि देने को तैयार विद्याधर कुमार जीमूतवाहन का चरित्र अंकित है। ]

( नेपथ्ये )

हा, पुत्रक शङ्खचूड ! कथं व्यापाद्यमानः किलाद्य त्वं मया प्रेक्षितव्यः ?

जीमूतवाहनः—( आकर्ण्य ) अये ! योषित इव आर्त्तनाद। तद् यावदुपेत्य केयं, कुतोऽस्या भयकारणमिति स्फुटीकरोमि ( परिक्रामति )।

( ततः प्रविशति क्रन्दन्त्या वृद्धयाऽनुगम्यमानः शङ्खचूडो वस्त्रयुगलयुक्तः किङ्करश्च )

शङ्खचूडः—अम्ब, अलमलं परिदेवितेन। पश्य—

क्रोडीकरोति प्रथमं जातं नित्यमनित्यता।

धात्रीव जननी पश्चात्तदा शोकस्य कः क्रमः॥ १॥

अम्बा—हा पुत्रक ! तिष्ठ, मुहूर्तमपि तावद्वदनं ते प्रेक्षिष्ये।

किङ्करः—एहि कुमार ! किं तवैतया भणन्त्या ? पुत्रस्नेह-मोहिता खलु एषा न राजकार्यं जानाति।

जीमूतवाहनः—( तान् विलोक्य आत्मगतम् ) अये ! इयमसौ योषित्, अनेन चास्याः पुत्रेण भवितव्यम्, यदर्थमाक्रन्दति। ( समन्तादवलोक्य ) न खलु भयकारणं पश्यामि। तत् किम् उपेत्य पृच्छामि ? अथवा, प्रसक्त एवालापः, कदाचिदित एव व्यक्तिर्भविष्यति। तद् विटपान्तरितो भूत्वा शृणोमि।

किङ्करः—( सास्रं कृताञ्जलिः ) कुमार शङ्खचूड ! नागराजो वासुकिराज्ञापयति यत् एतद् रक्तांशुकयुगलं परिधाय आरोह वध्यशिलां येन गरुडो गृहीत्वाऽऽहारकरणाय नेष्यति ( इति वस्त्र युगलमर्पयति )।

जीमूतवाहनः—( सास्रम् ) कष्टम् ! असौ वासुकिना परित्यक्तस्तपस्वी।

शङ्खचूडः—( सादरम् ) उपनय ( इति गृहीत्वा शिरसि स्वाम्यादेशम् अर्पयति)।

वृद्धा—( पुत्रहस्ते वाससी दृष्ट्वा ) हा वत्स ! ( मोहमुपगता )।

शङ्खचूडः—अम्ब, समाश्वसिहि, समाश्वसिहि।

वृद्धा—( सास्रम् ) पुत्रक ! कथं समाश्वसिमि ? हा कृतान्त-हतक ! कथमिदानीं त्वया निष्कृपहृदयेन विस्तीर्णे जीवलोके मम पुत्रक एव स्मृतः। सर्वथा हताऽस्मि मन्दभागिनी ( मूर्च्छां नाटयति )।

जीमूतवाहनः—भो कष्टम्—

आर्त कण्ठगत प्राणं परित्यक्तं स्व-बान्धवैः।
त्राये नैनं यदि ततः कः शरीरेण मे गुणः॥ २॥

तद् यावदुपसर्पामि।

शङ्खचूडः—अम्ब, संस्तम्भयात्मानम्।

वृद्धा—हा पुत्रक ! दुर्लभः संस्तम्भः। वासुकिना परित्यक्तस्य ते कः परित्राणं करिष्यति ?

जीमूतवाहनः—( उपसृत्य ) नन्वयमहम्।

वृद्धा—( ससम्भ्रममुत्तरीयेण पुत्रमाच्छाद्य, जीमूतवाहनमुपसृत्य ) गरुड ! विनतानन्दन ! व्यापादय माम्। अहं ते आहार-निमित्तं परिकल्पिता।

शङ्खचूडः—अम्ब, अलमलं त्रासेन। न खल्वयं नागशत्रुः।

वृद्धा—हा पुत्रक ! अहं पुनस्तव मरणभीता सर्वमेव गरुडमयं प्रेक्षे।

जीमूतवाहनः—अम्ब, मा भैषीः। नन्वयमहं विद्याधरः, तव सुत-संरक्षणार्थमेव अत्रागतः।

वृद्धा—( सहर्षम ) पुत्रक ! पुनः पुनरेवं भण ।

जीमूतवाहनः—अम्ब, किमनेन पुनः पुनरभिहितेन । कर्मणैव संपादयिष्यामि ।

वृद्धा—( शिरस्यञ्जलिं कृत्वा ) पुत्रक, चिरंजीव ।

जीमूतवाहनः—तदम्ब, अर्पय वध्यचिह्नं, यावदहं ते पुत्रस्य रक्षणार्थं स्वं देहं भक्षणार्थं गरुडाय ददामि ।

वृद्धा—( कर्णौ पिधाय ) प्रतिहतं खल्वेतत् । त्वमपि मे शङ्खचूड-निर्विशेषः, अथवा तस्मादपि प्रियतर एव, यो मम पुत्रार्थं स्वशरीरमपि दातुमिच्छसि ।

शङ्खचूडः—( सस्मितम् ) अहो ! जगद्विपरीतमस्य महासत्वस्य चरितम् । भो महात्मन्, अलमनेन निर्बन्धेन । कुतः —

जायन्ते च म्रियन्ते च मादृशाः क्षुद्रजन्तवः ।
परार्थे बद्धकक्षाणां त्वादृशामुद्भवः कुतः ॥ ३ ॥

जीमूतवाहनः—कुमार शङ्खचूड ! परार्थसंपादन-मनोरथस्य न मे अन्तरायं कर्तुमर्हति भवान् । ( पादयोः पतित्वा ) सदीयतां वध्यचिह्नम् ।

शङ्खचूडः—भो महासत्व, किमनेन वृथा प्रयासेन ? न खलु शङ्खचूडः शङ्खधवलं शङ्खपालकुलं मलिनी-करिष्यति । आसन्नः खलु गरुडस्यागमन समयः ।

तन्निवर्तस्व । अम्ब ! त्वमपि निवर्तस्वेदानीम्—

समुत्पत्स्यामहे मातर्यस्यां यस्यां गतौ वयम् ।
तस्यां तस्यां प्रियसुते ! माता भूयस्त्वमेव नः ॥ ४ ॥

( इति पादयोः पतति )

वृद्धा—( सास्रम ) पुत्रक ! त्वां परित्यज्य अन्यत्र मे पादौ न प्रसरतः । तत्त्वया सह गमिष्यामि ।

शंखचूडः—अहमपि तावद् भगवन्तं समीपवर्तिनं दक्षिणगोकर्णं प्रदक्षिणीकृत्य स्वाम्यादेशम् अनुतिष्ठामि ।

( मात्रा सह निष्क्रान्तः ) ।

जीमूतवाहनः—कष्टम् । न सम्पन्नमभिलषितम् । तत् कोऽत्र अभ्युपायः ।

( सहसा प्रविश्य )

काञ्चुकीयः—इदं वासोयुगलं देव्या मित्रावसोर्जनन्या कुमाराय प्रेषितम् । परिधत्तां कुमारः ।

जीमूतवाहनः—( गृहीत्वा आत्मगतम् ) सफलीभूतो मे मलयवत्याः पाणिग्रहणविधिः । ( परिधाय प्रकाशम् ) कञ्चुकिन्, गम्यताम् । मद्वचनादभिवादनीया देवी ।

काञ्चुकीयः—यदाज्ञापयति कुमारः ( निष्क्रान्तः ) ।

जीमूतवाहनः—वासोयुगमिदं रक्तं प्राप्तकाले ममागतम् ।
करोति महतीं प्रीतिं परार्थं देहमुज्झतः ॥ ५ ॥

तद् यावदसौ नागच्छत्येव शङ्खचूडः, तावत् त्वरिततर-मिमां वध्यशिलामारोहामि । ( तथा कृत्वा, उपविश्य, स्पर्शं नाटयन् ) अहो स्पर्शोऽस्याः !

न तथा सुखयति मन्ये मलयवती मलयचन्दनरसार्द्रा ।
अभिवाञ्छितार्थ-सिद्ध्यै वध्यशिलेयं यथा स्पृष्टा ॥ ६ ॥

अथवा किं मलयवत्या ?

शयितेन मातुरङ्के शैशवे न तत् प्राप्तम् ।
लब्धं सुखं मयास्या वध्यशिलाया यदुत्सङ्गे ॥ ७ ॥

तदयमागत एव गरुत्मान् । यावद् आत्मानमाच्छाद्य तिष्ठामि ।

( तथा कुर्वन् तिष्ठति )

## अभ्यासार्थ प्रश्न

१. इस नाटक का सार अपनी भाषा में कहिए ।
२. पाठ के आधार पर जीमूतवाहन की चारित्रिक विशेषताओं पर प्रकाश डालिए ।
३. पाठ में आए हुए श्लोक न० ३ एवं ४ के भाव को स्पष्ट कीजिए ।
४. अन्तराय, वत्सङ्ग, अन्तरिन, निष्कृपहृदय, शंखधवल शब्दों के अर्थ लिखिए ।
५. सन्धि-विच्छेद कीजिए–
मातुरङ्के; यदुत्सङ्गे, स्वाभ्यादेशान्, खल्वयं, नन्वयमहम्, पुनरभिहितेन, तद्दीयताम्, तन्निवर्तस्व ।

## अष्टाविंशतितमः पाठः

# परैः सह विरोधे तु वयं पञ्चशतं ध्रुवम्

[ **परिचय**—ये श्लोक महाभारत वन पर्व अध्याय २४१-२४२ में संकलित किए गये हैं। बाहरी शत्रु द्वारा आक्रमण होने पर हमें घर की आपसी फूट एवं कलह तथा व्यक्तिगत स्वार्थों को भुलाकर सम्मिलित रूप से उसका सामना करना चाहिए। यही इस पाठ का प्रमुख सन्देश है और भारतीयों ने जब-जब भी इस आदर्श को भुलाया है, तब ही उनको इस भूल की गहरी कीमत चुकानी पड़ी है। धर्मराज युधिष्ठिर का आदर्श चरित्र यहां अङ्कित हुआ है। ]

दुर्योधनमपि चित्रसेनो विरथं पतितं भुवि।
अभिद्रुत्य महाबाहुः जीवग्राहमथाग्रहीत् ॥ १ ॥
योधाश्च धार्त्तराष्ट्रस्य गन्धर्वैः समभिद्रुताः।
पूर्वं प्रभग्नाः सहिताः पाण्डवानभ्ययुस्तदा ॥ २ ॥

सैनिका ऊचुः—

प्रियदर्शी महाबाहुर्धार्त्तराष्ट्रो महाबलः।
गन्धर्वैर्ह्रियते राजा पार्थास्तमनुधावत ॥ ३ ॥

तांस्तथा व्यथितान् दीनान् भिक्षमाणान् युधिष्ठिरम्।
वृद्धान् दुर्योधनामात्यान् भीमसेनोऽभ्यभाषत ॥ ४ ॥

महता हि प्रयत्नेन सन्नह्य गजवाजिभिः।
अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितम् ॥ ५ ॥

शीतवातातपसहांस्तपसा चैव कर्षितान् ।
समस्थो विषमस्थान् हि द्रष्टुमिच्छति दुर्मतिः ॥ ६ ॥

अधर्मचारिणस्तस्य कौरव्यस्य दुरात्मनः ।
ये शीलमनुवर्त्तन्ते ते पश्यन्ति पराभवम् ॥ ७ ॥

दिष्ट्या लोके पुमानस्ति कश्चिदस्मत्प्रियेस्थितः ।
येनास्माकं हृतो भार आसीनानां सुखावहः ॥ ८ ॥

एवंब्रु वाणं कौन्तेयं भीमसेनमपस्वरम् ।
न कालः परुषस्यायमिति राजाभ्यभाषत ॥ ९ ॥

युधिष्ठिर उवाच—

अस्मानभिगतांस्तात भयार्त्ताञ्छरणैषिणः ।
कौरवान् विषमप्राप्तान् कथं ब्रूयास्त्वमीदृशम् ॥१०॥

भवन्ति भेदा ज्ञातीनां कलहाश्च वृकोदर ।
प्रसक्तानि च वैराणि कुलधर्मो न नश्यति ॥११॥

यदा तु कश्चिज्ज्ञातीनां बाह्यः प्रार्थयते कुलम् ।
न मर्षयन्ति तत् सन्तो बाह्येनाभिप्रधर्षणम् ॥१२॥

जानात्येष हि दुर्बुद्धिरस्मानिह चिरोषितान् ।
स एवं परिभूयास्मान् अकार्षीदिदमप्रियम् ॥१३॥

शरणञ्च प्रपन्नानां त्राणार्थञ्च कुलस्य च ।
उत्तिष्ठध्वं नरव्याघ्राः सज्जीभवत मा चिरम् ॥१४॥

वरदानञ्च राज्यञ्च पुत्रजन्म च पाण्डवाः ।
शत्रोश्च मोक्षणं क्लेशात्त्रीणि चैकञ्च तत्समम् ॥१५॥

अजातशत्रोर्वचनं तच्छ्रुत्वा तु धनञ्जयः ।
प्रतिजज्ञे गुरोर्वाक्यात् कौरवाणां विमोक्षणम् ॥१६॥

## अभ्यासार्थ प्रश्न

१ दुर्योधन को विपत्ति में पड़ा सुनकर भीमसेन ने क्या उद्गार प्रकट किए ?

२ भीमसेन के क्रोधपूर्ण वचनों को सुनकर युधिष्ठिर ने क्या कहा ?

३ अर्थ लिखिये—

महिताः, पराभव, परुपस्य, प्रतिजज्ञे ।

४ सन्धि-विच्छेद करिये—

तच्छ्रुत्वा, चैकञ्च, त्राणार्थञ्च, कश्चिज्ज्ञातीनां, तांस्तथा ।

५ व्याकरण-सम्बन्धी टिप्पणियाँ लिखिए—

सज्जीभवत, जीवग्राहं, अनुष्ठेयं, शरणैषिणः, उषितान्, परिभूय ।

## एकोनत्रिंशत्तमः पाठः

# धैर्ये मतिर्धीयताम्

[ परिचय—यह पाठ भी बाणभट्ट की 'कादम्बरी' से लिया गया है जिनके विषय में पीछे पाठ २० में कहा जा चुका है।

इसमें राजा तारापीड सन्तानाभाव से दुखी महारानी विलासवती को धैर्य धारण करने का उपदेश दे रहे हैं। ]

विरतवचनायां तस्यां भूमिपालस्तूष्णीं मुहूर्तमिव स्थित्वा दीर्घमुष्णं च निःश्वस्य निजगाद, देवि ! किमत्र क्रियतां दैवायत्ते वस्तुनि। अतिमात्रमलं रुदितेन। न वयमनुग्राह्याः प्रायो देवतानाम्। नूनमभाजनम् अस्माकं हृदयम् आत्मजावलोकन सुखस्य। अन्यस्मिन् जन्मनि न कृतमवदातं कर्म। जन्मान्तरकृतं हि कर्मफलमुपनयति पुरुषस्य इह जन्मनि। न हि शक्यं दैवमन्यथाकर्तुम् अभियुक्तेनापि। यावत्तु मनुष्येण शक्यम् उपपादयितुं तत्सर्वमुपपाद्यताम्। अधिकां कुरु, देवि ! गुरुषु भक्तिं। द्विगुणामुपपादय देवतासु पूजाम्। दर्शितादरा भव ऋषिजन-सपर्यासु। परं हि ऋषयः, यत्नेनाराधिता अतिदुर्लभानामपि वराणां दातारो भवन्ति। श्रूयते हि पुरा मगधेषु बृहद्रथो नाम राजा कौशिक प्रभावाद् अतिबलं जरासन्धं नाम तनयं लेभे। दशरथश्च राजा वार्द्धक्ये ऋष्य शृङ्गस्य

प्रसादात् अवाप चतुरः पुत्रान् । अन्ये च राजर्षयः तपोधना-नाराध्य पुत्रदर्शन-सुखं लेभिरे। अमोघफला हि महामुनिसेवा भवति । मामपि दहत्येवायम् अहर्निशं अनल इव अनपत्यता-समुद्भवः शोकः । शून्यमिव प्रतिभाति मे जगत् । अफलमिव पश्यामि राज्यम् । अप्रतिविधेये तु विधातरि किं करोमि। तन्मुच्यतामयं देवि ! शोकानुबन्धः । आधीयताम् धैर्ये धर्मे च धीः ।

इत्यभिधाय सलिलमादाय स्वयं करतलेन अस्याः साश्रुलेख माननं ममार्ज । पुनः पुनश्च मधुराभिः धर्मपराभिर्वाग्भिः आश्वास्य चिरं स्थित्वा नरेन्द्रो निर्जगाम ।

## अभ्यासार्थ प्रश्न

१. इस पाठ को स्वरचित संस्कृत में लिखिए ।

२. 'विरत वचनायां तस्यां' में कौनसी विभक्ति प्रयुक्त हुई है और क्यों ? इस प्रकार के अन्य प्रयोगों का अभ्यास कीजिए ।

३ अर्थ लिखिए—

अप्रतिविधेये, सपर्यासु, अवदात, देवाधरो, अभियुक्तेन ।

४. सविग्रह समास लिखिए—

आत्मजावलोकन सुखस्य, दर्शितादरा, ऋषिजन सपर्यासु, अमोघफला ।

५ 'अलं रुदितेन' में तृतीया विभक्ति प्रयुक्त होने का क्या कारण है ?

## त्रिंशत्तमः पाठः

# महाराणा प्रतापः

[ **परिचय**—अकबर की नीति-पटुता एवं अपार सैन्य-बल के समक्ष घुटने न टेकनेवाले मेवाड़-केसरी महाराणा प्रताप का जीवन-चरित्र यहाँ दिया गया है। इनके जीवन का आदर्श प्रत्येक भारतीय के लिए अनुकरणीय है। ]

षोडश्यां शताब्द्यां राजपुत्र प्रान्तस्य वीरप्रसवा मेवाड़ भूमिः वीरशिरोमणिं महाराणा प्रतापं जनयामास। स वीरो यवन-साम्राजोऽकबरस्य चरण-चुम्बनात् भारतमातुश्चरणयोः स्व मस्तकार्पणं श्रेयस्करममन्यत। स महाराजस्य उदयसिंहस्य ज्येष्ठः पुत्र आसीत्। अयं वीराग्रणीः १५४० तमे खिष्टाब्दे मई मासस्य नवमे दिवसे स्वजन्मनाऽलञ्चकार मेवाड़भूमिम्। शैशव एव तस्य हस्तरेखामवलोक्य जगाद कश्चन दैवज्ञः—'यदयं कुलदिवाकरोऽत्यन्त प्रतापी भविष्यति, दीपयिष्यति च स्वीयं कुलमसामान्येन पराक्रमेण।' दैवज्ञस्य वाणी सत्याऽभूत्। राजसिंहासनाधिरोहण-समकालमेव तन्मनसि यवन-पारतन्त्र्य-शृंखलात् स्व-देशं मोचयितुं प्रबलेच्छा प्रादुरभूत। १५७२ तमेऽब्दे राजसिंहासनमधिरुह्य यवनैः सह योद्धुं सैन्यसंग्रहं स कर्तुमारेभे। स राजपुत्राणाम् अपहृतां स्वतन्त्रतां कीर्तिं च पुनः प्राप्तुं भृश प्रायतत एतदर्थं जातानि बहूनि युद्धानि

यवन सेनया: परं तेषु हल्दीघाटीयुद्धम् अतिशेते इतराणि सर्वाणि।

अस्मिन्नेव युद्धे प्रतापस्य प्रताप-वैजयन्ती क्षत्रियाणामद्वितीया वीरता उत्कटा देशभक्तिश्च जाता अक्षया जगति। अस्मिन्युद्धे अकबरस्य प्रधानसेनापतिः मानसिंहो महत्या यवन सेनया मेवाड़भूमिमाचक्राम। १५७६ तमेऽब्दे ऐतिहासिके हल्दी-घाटीस्थाने अतिभीषणं युद्धमभवत्। महतीयवनसेनाऽपि प्रतापस्य प्रतापाग्रे स्थातुं नाशक्नोत्। अल्पसंख्याका अपि देशभक्ताः वीरा राजपुत्राः प्राणानविगणय्य तथा युद्धं चक्रुः यथाऽतिविशालाऽपि यवनसेनोच्छिन्ना जाता। यद्यपि प्राप्ता विजयश्रीः प्रतापेन परं जाता महती क्षतिः। प्रायः सर्वा सेना विनष्टा। विशिष्टा वीराश्च युद्धे प्राणान् अत्यजन्।

पराजितोऽकबरो मुहुर्मुहुः आक्रमणं चकार। क्रमशः प्रतापस्य सर्वं सैन्यं शस्त्रादिकञ्च निःशेषतां गतम्। विवशः प्रतापो मेवाड़भूमिं परित्यज्य स्वकुटुम्बेन सह पर्वतेषु इतस्ततोऽभ्रमत्। 'चित्तौर-स्वतन्त्रता-प्राप्ति-पर्यन्तं पात्रेषु भोजनं, पर्यङ्के शयनञ्च न करिष्यामि' इत्यासीत् तस्य प्रतिज्ञा। भोजनाच्छादनादिकमपि तस्य दुर्लभं जातं, बहुशः निराहारस्य तस्य दिनानि व्यतीतानि। एकदा द्वित्रेभ्यो दिनेभ्यः पश्चात्तस्य पुत्रेणैका घासरोटिका प्राप्ता, परम् अहो दुर्भाग्यम्! साऽपि एकेन वन्यविडालेन अपहृता। क्षुधितो बालश्चक्रन्द। तदवलोक्य धीरहृदयोऽपि प्रतापः विचचाल स्वीकर्तुं मतिं चकार

सन्ध्यर्थम् अकबर समीपे पत्रमपि प्रेषितवान्। अकबरः तत्पत्रं पठित्वाऽतितरां प्रसन्नो जातः, सभामध्ये च तत्पत्रं श्रावयामास। परं पृथ्वीराजो मध्ये एव जगाद—'नैतत्पत्रं प्रतापस्य, अपितु कस्यचित्तस्य वैरिणः। यदि न विश्वासो मद्वचसि तर्हि प्रतापः प्रष्टव्यः।' तस्मिन्नेव च समये पृथ्वीराज एकमोजस्विकवितामयं पत्रं विलिख्य प्रतापाय प्रेषितवान् तस्यात्मसमर्पणं च निन्दित्-वान्। प्रतापोऽपि तं पत्रं वाचयित्वा मातृभूमि-स्वतन्त्रतायै बद्धपरिकरोऽभवत्।

परं सैन्य-संघटनाय द्रव्यस्य परमाऽपेक्षाऽऽसीत्। ताञ्च न्यूनतां भामाशाहो दूरीचकार। लक्षशः सुवर्णमुद्राः प्रताप-चरणयोरर्पयामास सः। तस्य स्वदेशभक्तिं समीक्ष्य प्रतापस्तं हृदयेनालिलिङ्ग। ततो वन्य-भिल्लादीनां महतीं सेनामादाय प्रतापः पुनर्मेवाड़मधिकर्तुं प्रायतत। जातश्च सफलस्तत्र। चित्तौरदुर्ग-मन्तरा सर्वो मेवाड़प्रदेशस्तेन स्वतन्त्रः कृतः।

प्रतापस्य व्रतमासीत्—'कार्यं वा साधयेयं, देहं वा पातयेयम्।' देशवासिभिः प्रतापस्य चरित्रेन देशभक्तेः शिक्षा ग्रहीतव्या।

## अभ्यासार्थ प्रश्न

१. प्रताप के जीवन-चरित्र से क्या शिक्षा मिलती है? उनका व्रत क्या था?

२. हल्दीघाटी के युद्ध का संक्षिप्त वर्णन स्व-रचित संस्कृत में करिए।

३ अर्थ लिखिए—

अधिकर्तुम्, देवज्ञः, अतिशेते, अविगणय्य, विशिष्टा ।

४. निम्न क्रिया पदों के रूप भविष्यत्काल में चलाइए:—

अत्यजन्, अभवत्, अमन्यत ।

५. निम्न शब्दों के रूप चलाइए:—

भूमि, जन्मन्, मनस्, जगत्, वैरिन् ।

---

## एकत्रिंशत्तम. पाठ.

# शरद्वर्णनम्

[ शरद् का यह वर्णन आदि कवि वाल्मीकि की रामायण से संकलित किया गया है। रामायण भारतीय संस्कृति एवं सभ्यता का प्रधान उन्नायक ग्रन्थ है। इसमें २४००० श्लोक हैं जिनमें अत्यन्त रोचक ढंग से मर्यादा पुरुषोत्तम राम का आदर्श चरित्र अंकित हुआ है। ]

लोकं सुवृष्ट्या परितोषयित्वा नदीस्तटाकानि च पूरयित्वा।
निष्पन्न-सस्यां वसुधां च कृत्वा त्यक्त्वा नभस्तोयधराः प्रनष्टाः॥१॥

शाखासु सप्तच्छद-पादपानां प्रभासु ताराऽर्क-निशाकराणाम्।
लीलासु चैवोत्तम-वारणानां श्रियं विभज्याद्यशरत्प्रवृत्ता॥ २॥

मदप्रगल्भेषु च वारणेषु गवां समूहेषु च दर्पितेषु।
प्रसन्नतोयासु च निम्नगासु विभाति लक्ष्मीर्बहुधा विभक्ता॥ ३॥

अभ्यागतैश्चारुविशालपक्षैः स्मरप्रियैः पद्मरजोऽवकीर्णैः।
महानदीनां पुलिनोपयातैः क्रीडन्ति हंसाः सह चक्रवाकैः॥ ४॥

व्यपेतपङ्कासु सुवालुकासु प्रसन्नतोयासु सगोकुलासु।
स-सारसाऽऽराव-विनादितासु नदीषु हृष्टा निपतन्ति हंसाः॥ ५॥

अनेकवर्णाः सुविनष्टकाया नवोदितेष्वम्बुधरेषु नष्टाः।
क्षुधार्दिता घोरविषा बिलेभ्यश्चिरोषिता विप्रसरन्ति सर्पाः॥ ६॥

व्यभ्रं नभः शस्त्र-विधौतवर्णं कृश-प्रवाहाणि नदीजलानि ।
कल्हार-शीताः पवनाः प्रवान्ति तमो-विमुक्ताश्च दिशः प्रकाशाः ॥७॥

नवैर्नदीनां कुसुम-प्रहासैर्व्याधूयमानैर् मृदु-मारुतेन ।
धौताऽमलक्षौमपट-प्रकाशैः कूलानि काशैरुप शोभितानि ॥ ८ ॥

जलं प्रसन्नं कुसुदं प्रहासं क्रौञ्चस्वनः शालिवनं विपक्वम् ।
मृदुश्च वायुर्विमलश्च चन्द्रः शंसन्ति वर्षाव्यपनीतकालम् ॥ ९ ॥

## अभ्यासार्थ प्रश्न

१. सविग्रह समास लिखिए—

प्रसन्नतोयासु, चारुविशालपक्षैः, स्मरप्रियैः, व्यपेतपंकासु, सुवालुकासु, अनेकवर्णाः, कुवादिनाः, शस्त्रविधौतवर्णं, कल्हारशीता ।

२. अर्थ लिखिए—

प्रसन्नच्छदपादपानाम्, वारणानाम्, मदप्रगल्भेषु, व्यभ्र, क्रौञ्चस्वनः ।

३. शंसन्ति, क्रीडन्ति, निपतन्ति क्रियाओं के रूप विधिलिङ् में चलाइए ।

४. अन्तिम श्लोक को स्वरचित संस्कृत मे लिखिए ।

# सूक्तयः

[ संस्कृत-साहित्य अनुपम रत्नों का पारावार है। ये सभी सूक्तियाँ कण्ठस्थ करने योग्य हैं। ]

सा विद्या या विमुक्तये।

अति सर्वत्र वर्जयेत्।

अवातेऽपि निष्कम्पा गिरयः।

साहसे श्रीर्वसति।

छिन्ने मूले नैव शाखा न पत्रम्।

बहुभाषिणो न श्रद्दधाति लोकः।

जल बिन्दुनिपातेन क्रमशः पूर्यते घटः।

दूरतः पर्वता रम्याः।

निरस्तपादपे देशे एरण्डोऽपि द्रुमायते।

शरीरमाद्यं खलु धर्मसाधनम्।

मतिरेव बलाद् गरीयसी।

संघे शक्तिः कलौयुगे।

पयः पानं भुजङ्गानां केवलं विषवर्धनम्।

अविवेकः परमापदां पदम्।

दैवो दुर्बलघातकः।

संतोष एव पुरुषस्य परं निधानम्।

शाम्येत् प्रत्युपकारेण नोपकारेण दुर्जनः ।

सत्सङ्गतिः कथय किं न करोति पुंसाम् ।

विद्वान् सर्वत्र पूज्यते ।

मूढः परप्रत्ययनेय बुद्धिः ।

हितं मनोहारि च दुर्लभं वचः ।

परोपकाराय सतां विभूतयः ।

निःस्पृहस्य तृणं जगत् ।

न धर्मवृद्धेषु वयः समीक्ष्यते ।

छिद्रेष्वनर्था बहुलीभवन्ति ।

चिन्तासमं नास्ति शरीर शोषणम् ।

गतं न शोचामि, कृतं न मन्ये ।

जातस्य हि ध्रुवो मृत्युः ।

आर्जवं हि कुटिलेषु न नीतिः ।

सर्वः स्वार्थं समीहते ।

पतनान्ताः समुच्छ्रयाः ।

अप्राप्यं नाम नेहास्ति धीरस्य व्यवसायिनः ।

उदारचरितानां तु वसुधैव कुटुम्बकम् ।

उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये ।

क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ।

गुणाः पूजास्थानं गुणिषु न च लिंगं न च वयः ।

याञ्चा मोघा वरमधिगुणे नाधमे लब्धकामा ।

रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ।

के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ।

कुतो विद्यार्थिनः सुखम् ।
उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् ।
लिखितमपि ललाटे प्रोज्झितुं कः समर्थः ।

## अभ्यासार्थ प्रश्न

१. द्रुमायते, कृष्णायते पर व्याकरण-सम्बन्धी टिप्पणियाँ लिखिए ।

२. स-विग्रह समास लिखिए—

लब्धकामा, निष्फलारम्भयत्नाः ।

३. 'सङ्घे शक्तिः कलौयुगे' पर एक छोटा-सा लेख लिखिए ।

४. 'दूरतः पर्वता रम्याः' एवं 'पतनान्ताः समुच्छ्रयाः' के भावों को स्पष्ट करिए ।

# शब्द-कोष

## ( १ ) ईश-स्तुतिः

द्रविणम् (न०)=धन ।
ध्येयम्=उपास्य ।
अपरे=दूसरे ।
दिवाकरम् (पु०)=सूर्य ।
सोदर (पु०)=सगा भाई ।
आत्मजः (पु०)=पुत्र ।
संदृश्यते=दिखाई देता है ।
दुर्वासना (स्त्री०)=बुरी इच्छाएँ, बुरे संस्कार ।
परिकर्षयन्ति=खींचती है ।
परहस्तगतम्=दूसरों के अधीन ।
संजीवनम्=जीवन ।

## ( २ ) आश्रम वर्णनम्

रमणीयः=सुन्दर, मनोहर ।
पादपैः (पु०)=पेड़ों के द्वारा ।
परिचर्या (स्त्री०)=सेवा, शुश्रूषा ।
आलोचनम् (न०)=विचार, विमर्श ।
अजिरम् (न०) = आँगन, अङ्गण ।
दृष्टिपथम् आयाति=दिखाई दे रहा है ।
समिधः (स्त्री०)=यज्ञ-काष्ठ ।
संचिन्वन्ति=इकट्ठा करते हैं, सम्-√चि स्वादि, लट्, प्र० पु०, बहु० ।
ग्रथ्नन्ति=गूँथते हैं; √ग्रन्थ, क्र्यादि परस्मैपद, लट्, प्र० पु०, बहु० ।
परिव्राजकान् (पु०)=संन्यासियों को ।
परिदधति=पहनते हैं; परि-√धा जुहोत्यादि, लट्, प्र० पु०, बहु० ।
अभ्यस्यन्ति=अभ्यास करते हैं, अभि-√अस् दिवादि, लट्, प्र० पु०, बहु० ।
तारस्वरेण=उच्चस्वर से ।
अजिनानि (न०)=मृगचर्म ।
अपहाय=छोड़कर; अप √हा+क्त्वा (ल्यप) ।
शान्त्या प्रेम्णा च = शान्ति और प्रेम से ।

## (३) नृपभोजस्य दानशीलता

दानतत्परम् = दान देने में लगे हुए।
शयनभवनभित्तौ = शयनगृह की दीवार पर, शयनभवनस्य भित्तौ। (षष्ठी तत्पुरुष समास)
उत्थाय = उठकर, उत् √स्था + क्त्वा (ल्यप्)।
गच्छन् = जाते हुए, √गम् + शतृ।
अपरेद्युः = दूसरे दिन।
चेद् अपगता = यदि चली जावे; अप √गम् + क्त + टाप्।
संचितार्थः = इकट्ठा किया हुआ धन।
विनश्यति = नष्ट हो जाता है, वि √नश् दिवादि गण, प्र० पु०, एक०।
क्षन्तव्यः = क्षमा करने योग्य।

## ( ४ ) विद्या-प्रशंसा

कोशः (पु०) = खजाना।
व्ययतः (पु०) खर्च करने से।
क्षयम् ( पु० ) नाश।
वराकोदर-पूरणे = बेचारे पेट के भरने में।
अशनम् (न०) = भोजन।
अनेक संशयोच्छेदि = अनेक शंकाओं को नष्ट करनेवाला।
परोक्षार्थ (पु०) = आँख से न दिखाई देने वाली वस्तु; जिस वस्तु का इन्द्रियों से ज्ञान नहीं होता।
लोचनम् (न०) = नेत्र।
ज्ञातिभिः = जातिवालों के द्वारा।
वण्ट्यते = बाँटा जाता है।
चौरहार्यम् = चौरेण हार्यम्; चोरों द्वारा चुराने योग्य, हृ + ण्यत्।
भारकारि = भार करनेवाला।
व्ययेकृते = खर्च करने पर।

## ( ५ ) प्रभातवेला

शिशिरः = शीतल ।

समीरः (पु०) वायु ।

कलम् = मधुर ।

तर्पयति = तृप्त करता है ।

कुसुमरसपानेन = पुष्प-रस ( मकरन्द ) के पीने से ।

साम्प्रतम् = इस समय ।

भास्करः (पु०) = सूर्य ।

भासयन् = प्रकाशित करता हुआ ।

स्व-आपणान् (पु०) = अपनी दूकानों से ।

उद्घाटयन्ति = खोलते हैं ।

द्रुतगत्या = तेज चाल से ।

प्रयान्ति = जाते हैं; प्र - √या लट्, प्र० पु०, बहु० ।

सम्प्रति = इस समय ।

## ( ६ ) रामस्य लोकाराधनम्

आसन्न = समीप; आङ्— √सद् + क ।

पौरजानपदेषु = नगर और जनपद के निवासियों में ।

अन्तरेण = विषय में; इसके योग में द्वितीया विभक्ति आती है ।

जनापवादम् = लोक - निन्दा को; जनानां अपवादम् ( षष्ठी तत्पुरुष ) ।

अर्थवाद (पु०) = प्रशंसा, स्तुति ।

प्रतिविधीयेत् = प्रतिकार किया जा सके; प्रति—वि—√ धा + यक, विधिलिङ् ।

आश्वसितु = धैर्य धारण करो ।

सताम् = सज्जनों का ।

मुञ्चता = छोड़ते हुए, √ मुच् + शतृ, तृतीया विभक्ति एक वचन का रूप है ।

देवयजनसम्भवे = यज्ञ से पैदा-होनेवाली ।

नृशंस = क्रूर, निर्दय ।

बीभत्स = घृणित ।

सौख्यम् (न०) = सुख ।

मुञ्चतः = छोड़ते हुए; षष्ठी एक वचन का रूप है ।

## ( ७ ) आचारः परमो धर्मः

उदितम् = कथित; √वद् + क्त ।

अतन्द्रितः = आलस्यरहित ।

अलक्षणम् = दुर्भाग्य ।

हन्ति = नष्ट करता है, मारता है; √ हन् लट्, प्र० पु० एक व० ।

व्याधितः = रोगी ।

अनसूयः = ईर्ष्या न करनेवाला।

स्याद्=होवे, √ अस् विधिलिङ्, प्र० पु० एक० व० ।

आत्मवान् = जितेन्द्रिय ।

आचारतः = आचार से ।

जगृहुः = ग्रहण किया, स्वीकार किया ।

## ( ८ ) भारतवर्षम्

अस्माकम् = हमारा; 'अस्मद्' शब्द का षष्ठी बहु० व० रूप है ।

क्षालयन्ति = धोती हैं ।

अभिषेकेण (पु०) = स्नान करने से, अभिषेक का तृतीया एक० व० रूप है ।

पर्यायेण (पु०) = क्रमशः ।

लीला (स्त्री०) = क्रीड़ा, विलास।

जन्मग्रहीतुम् = जन्म ग्रहण करने के लिये ।

अभिहितम् = कहा गया है, अभि √ धा+क्त ( Passive Past participle) लट्-अभिधत्ते, लृट्-अभिध्यासते, लङ्-अभ्यधत्त ।

देश-प्रसूतस्य = देश में पैदा होने वाले ( अग्र जन्मनः का विशेषण है ) ।

सकाशात् = पास से ।

अग्रजन्मनः ( पु० ) = ब्राह्मण, अग्रजन्मन् शब्द का षष्ठी एक० व० रूप है ।

## ( ९ ) अतिलोभो न कर्त्तव्यः

कुर्वतः = करनेवाले, कुर्वत् शब्द का षष्ठी ए० व० रूप है।

घर्मार्त्तः = घर्मेण आर्त्तः ( तृतीया तत्पुरुष समास ) धूप से व्याकुल ।

अनतिदूरे = समीप ।

फटा (स्त्री०) = फण ।

बृहत्फटायुक्तम् = बड़े भारी फण-वाले ।

अवधार्य = निश्चय करके; अव-√धृ + णिच् + क्त्वा (ल्यप्)।

अन्तिकम् = समीप।

गृहाभिमुखम् = घर की ओर।

दीनारम् (पु०) = मुद्रा।

शरावे (पु०) = शकोरा, सप्तमी ए० व० रूप है।

संस्थाप्य = रखकर; √सं-स्था-णिच्-क्त्वा (ल्यप्)।

सम्प्रधार्य = निश्चय करके।

ददता = देनेवाले। √दा + शतृ — ददत् का तृतीया ए० व०,

पञ्चत्वम् (न०) = मृत्यु।

## (१०) क्षमा हि परमं तपः

उपान्ते = समीप में।

दाम्भिकः = पाखण्डी।

हीनचरणेक्षणम् = आँखों और पैरों से रहित, चरणौ च ईक्षणे च चरणेक्षणम्, हीनं चरणेक्षणं यस्य तम्। (बहुव्रीहि समास)

निगृहीतम् = दण्डित।

चार = गुप्तचर।

आनाय्य = बुलाकर; आ-√नी +णिच् + क्त्वा (ल्यप्)।

दिदेश = आज्ञा दी; √दिश् + लिट्।

यतात्मना = संयमी के द्वारा। यतात्मन् (पु०) का तृतीया एक व० का रूप है।

अद्रव्यडम्बरः = द्रव्य के आडम्बर से रहित।

भाजनम् (न०) = पात्र।

प्ररूढा = पैदा हुई; प्र, √रुह + क्त + स्त्रीलिंग में टाप प्रत्यय।

वल्ली (स्त्री०) = लता, बेल।

## (११) आत्मोत्सर्गः

पदात्पदम् = एक कदम भी।

भेतव्यम् = डरना चाहिए।

अनुभवितुम् = भाग लेनेके लिए; अनु-√भू + तुमुन्।

समयतः = शर्त से।

उपवासनिसर्गार्थं = उपवास खोलनेके लिए। उपवासस्य निसर्गार्थं, (षष्ठी तत्पुरुष समास):

आनेतव्यः = लाना चाहिए; आङ्—√नी तव्य।
विसर्जय—छोड़ दो; वि—√सृज् + णिच् + लोट्।
परिणामेन (पु०) = बुढ़ापे से।
सुतापेक्षी = पुत्रोंकी चाहवाला।
मोक्तुम् अर्हति=छोड़ देना उचित है।
वात्सल्यम् (न०) = प्रेम, अनुराग।
विधास्यामि = करूँगा।
घटोत्कचेन सह = घटोत्कच के साथ, सह के योग में तृतीया विभक्ति आती है।

## (१२) भगवान् महावीरः

प्रसृतम् = फैला हुआ।
प्राक् = पहले।
विहाय = छोड़कर, वि—√हा + क्त्वा (ल्यप्)।
अलञ्चकार = अलंकृत किया।
सुखावह = सुखकर।
यापयित्वा = बिताकर। √या + णिच् + क्त्वा (ल्यप्)।
अधिगतवान् = प्राप्त किया; अधि—√गम + क्तवतु।
निपाने (न०) = जलाशय में, निपानं का सप्तमी ए० व० रूप है।
पाययित्वा = पिलाकर।
निर्वाणपदम् (न०) = मोक्ष, निर्वाण का शाब्दिक अर्थ है, 'बुझना' जैसे दीप-निर्वाणं; बौद्ध और जैन साहित्य में मोक्ष के लिए निर्वाण शब्द का प्रयोग हुआ है।
दयनम् (न०) = दया।
सारणिः (स्त्री०) = मार्ग।
आचरेयुः = करें।

## (१३) प्रश्नोत्तरी

किस्वित् = कौन, क्या।
उच्चतरम् = उच्च + तर—अधिक ऊँचा।
खात् (न०) = आकाश से, 'ख' शब्द का पंचमी ए० व० रूप है।
प्रवसतः = प्रवासी का; परदेश में गए हुए का, प्र—√वस + शतृ—प्रवसत् का षष्ठी ए० व० रूप है।

आतुर = रोगी, दुखी।
मरिष्यतः = मरनेवाले का— यह भी प्रवसतः की तरह ही बना है।
श्रोत्रियः = वेदपाठी।
अदक्षिणः = दक्षिणा रहित।
अनन्तकः = अन्त रहित।
मत्सरः (पु०) = ईर्ष्यालु, द्वेषी।
हृत्तापः (पु०)=हृदय का सन्ताप।
यक्ष = देव योनि विशेष; यह वार्तालाप युधिष्ठिर तथा यक्ष के बीच में हो रहा है। प्यास से व्याकुल होकर जब भीम, अर्जुन, नकुल, सहदेव क्रमशः पानी पीने जाते हैं तो उस तालाब का अधिष्ठाता यक्ष उनसे ये प्रश्न पूछता है; परन्तु वे बिना ध्यान दिए ही पानी पी लेते है और मृत्यु को प्राप्त होते हैं। अन्त में युधिष्ठिर आते हैं और यक्ष के सब प्रश्नों का उत्तर देते है और यक्ष की कृपा प्राप्त करके अपने सब भाइयों को जीवित कर लेते है। यह यक्ष वास्तव मे धर्मराज ही थे।

## (१४) भोजस्य चरम-श्लोकः

निधनम् (न०) मृत्यु को।
मृगयितुम् = तलाश करने के लिए; √मृग चुरादि + तुमुन्।
कापालिकवेषं धृत्वा = संन्यासी का वेश धारण करके।
स्थितिः (स्त्री०) निवास, रहना; √स्था + क्तिन्।
वसतिः (स्त्री०) = निवास; √वस् + अति।
दिवं गते = मर जाने पर।
चरमश्लोकः = अन्तिम प्रशंसा पद्य।
विसंज्ञः = अचेतन, मूर्च्छित।
सत्वरम् = शीघ्र त्वरया सहितम् सत्वरम्;।
प्रकारान्तरेण = दूसरे प्रकार से।
तेन सह = उसके साथ—सह के योग मे तृतीया का प्रयोग हुआ है।

## (१५) शील पर भूषणम्

राज्यं कुर्वति= जब राज्य कर रहे थे, यहाँ सप्तमी विभक्ति का प्रयोग होना है।

अधिगतवान्=पढ़ी, प्राप्त की; अधि + √गम् + क्तवतु ।

व्यवहारनिर्णयम् = व्यवहारस्य निर्णयम्, न्याय।

कूटार्थं = मिथ्या।

अनुसंधेयाः = तलाश करना चाहिए; अनु-सम्-√धा +यत्।

सारथिद्वितीयः—सारथि को ही साथ लेकर; सारथिः द्वितीयः यस्य सः (बहुव्रीहि)।

पर्यन्तभूमिं = सीमा प्रदेश तक।

प्रत्यन्तसीमतः-सीमा प्रदेश से।

मतिंचकार = विचार किया, संकल्प किया।

अगुणवादिनम् = दोष बतलाने वाले को, अगुणवादिन् का द्वितीया एक व० है।

शकटमार्गे = रथ के मार्ग में।

निपण्णाः = बैठे हैं; नि-सद् + क्त।

अपसार्य = हटाकर; अप-सृ + णिच् + क्त्वा (ल्यप्)।

दहरतरस्य = छोटे का, दहरतर का षष्ठी ए० व०।

अलीकवादिनम् = मिथ्यावादी को।

अपनीय = हटाकर अप-नी + क्त्वा (ल्यप्),।

## (१६) प्रहेलिका

(१) पत्रम्

अपदत् = चरण रहित।

स्फुटवक्ता = स्पष्ट बोलने-वाला।

(२) उक्षा, वृषभ, साँड

गोपाल=गायों का स्वामी।

गोपाल = कृष्ण।

(३) छोटिका, चुटकी

नरनारी समुत्पन्ना = अँगूठे और अँगुली से पैदा होनेवाली।

(४) नयनम्

(५) यवसः (घास)
अभिजानीयात् = जाने ।

(६) शालग्रामः—यह एक मूर्ति होती है जो काले रंग की तथा गोल-गोल होती है ।

(७) लेखनी
पञ्चभर्त्री = पाँच पतियों-वाली ।
पञ्चभर्त्री = पाँच अँगु-लियों से धारण की जाने-वाली ।

## (१७) विनोदवार्ता

वृन्ताकम् (पु०) = बैंगन, वृन्ताक शब्द का द्वितीया ए० व० ।

प्रत्यागच्छन् आसीत् = लौट रहा था, प्रति–आ + √गम् + शतृ ।

ज्वरार्तं श्रुत्वा = ज्वर-पीड़ित है ऐसा सुनकर । ज्वरेण आर्तः तम् (तृतीया तत्पुरुष समास) ।

प्रसादेन = कृपा से ।

भद्रतरम् = श्रेष्ठ, अच्छी; भद्र से तरप् प्रत्यय है ।

संभाष्य = बातचीत करके; सम्–√भाष् + क्त्वा (ल्यप्) ।

आपृच्छ्य = जाने की अनुमति लेकर, आमन्त्र्य ।

श्रेयान् = अच्छा है, श्रेष्ठ; प्रशस्य + ईयसुन् श्रेयान्, श्रेयांसौ, श्रेयांसः ।

समाविष्टः = युक्तः सम्, आ + √विश् + क्त ।

परिजनम् (पु०) = नौकर को ।

क्षते क्षारं प्रक्षिपति = मुहावरा है–जले पर नमक छिड़क रहा है ।

अर्धचन्द्रदानेन = गलहस्तिकया–गले को अर्धचन्द्राकार हाथ से पकड़कर ।

निष्कासितः = बाहर निकाल दिया गया । √निर्–कस (भ्वादि, परस्मैपद-जाना) + णिच् + क्त ।

## (१८) पितृसेवा परोधर्मः

समुत्सृज्य = छोड़कर; सम्-उत् -√ सृज्+क्त्वा (ल्यप्)।

तरुच्छायोपविष्टस्य = पेड़ की छाया में बैठे हुए के; उप-विश् + क्त, तरुच्छायायां उपविष्टस्य।

बलाका (स्त्री०) = बक, बगुला।

पुरीषमुत्ससर्ज = बीट करदी।

वीक्षमाणम् = देखते हुए; वि + ईक्ष् + शानच्।

भैक्षम् (न०) = भिक्षा को।

अनन्यगोचरः = दूसरे से अज्ञात।

श्रेयः (न०) = कल्याण; प्रशस्य + ईयसुन्।

समन्विष्य = खोज करके; सम्-अनु-इष्+क्त्वा (ल्यप्)।

विपणिस्थं = दूकान पर बैठे हुए को।

अर्थलालस्येन = धन की लालसा से, धन की इच्छा से, अर्थस्य लालस्येन।

निर्बाधम् = अप्रतिहत, ज्ञान का विशेषण है।

आशु = शीघ्र।

अनन्यभक्त्या = अनन्यभक्ति से।

## (१९) बुद्धस्योपदेशः

अप्रमादेन = सावधानी से।

मघवा = इन्द्र। मघवन् शब्द प्रथमा विभक्ति का एक वचन।

निगच्छति = प्राप्त होता है।

सन्तुष्टिः (स्त्री०) = सन्तोष, सम्-√ तुष् + क्तिन्।

निर्वाणं (न०) = मोक्ष।

विप्रमुक्तस्य = वियुक्त, रहित।

वान्तमलः = वान्तानि मलानि यस्य सः; जिसके दोष बाहर निकल गए हैं।

स्थविरः = वृद्ध।

संवृतं त्रिभिः स्थानैः = जो तीनों स्थानों-काय, वाक्, मन से सुरक्षित है अर्थात् जिसके तीनों स्थान वश में हैं।

परत्र = दूसरे लोक में।

इह = इस लोक में।

विसंयुक्तम् = बन्धन रहित।

निराशय = आशा रहित, कामना रहित।

## (२०) प्रमादं न सखे कुरु

नैतदनुरूपं भवतः = यह तुम्हारे लिए उचित नहीं है।

क्षुद्रजनक्षुण्णः = तुच्छ मनुष्यों के द्वारा स्वीकृत हुआ।

प्राकृत = साधारण, पामर।

विक्लवीभवन्तम् = व्याकुल होते हुए।

अपूर्वः = नवीन, विलक्षण।

उपप्लवः = (पु०)=विघ्न, विकार।

श्रुतानि = शास्त्र।

तपसि अभिनिवेशः = तपस्या करने का आग्रह, तपस्या करने की रुचि।

प्रबुद्धता = जागरूकता।

आहोस्वित् = अथवा।

आयास्यते = पीड़ित किया जाता है।

निवारयसि = रोकते हो।

उन्मार्गप्रस्थितानि = इन्द्रियाणि का विशेषण है-कुमार्ग पर जानेवाली।

## (२१) महात्मा गांधी

आचचार = किया।

उपकृतानि (न०)=उपकारों को। √ उप + कृ + क्त (भावे)।

स्मारं स्मारम् = स्मरण करके। √ स्मृ + णमुल्।

अवनतमूर्धा = सिर झुकाए हुए।

साम्प्रतम् = इस समय।

स्थास्यति च चिरम् = हमेशा रहेगा।

अन्वर्थं = यथार्थ।

उपयेमे = विवाह किया।

गमनात् प्राक् = जाने से पहले; प्राक् के योग में पंचमी का प्रयोग।

समुद्धाराय = उद्धार के लिए; √ सम्, उत् + धृ + घञ्।

संघटयितुम् = संगठित करने के लिए।

अस्पृश्यतायाः = छुआछूत का।

मादकवस्तूनां = नशीली चीजों का।

तदानींतना = उस समय के।

यावज्जीवम् = जीवन पर्यन्त।

भाजने (न०) = पात्र में ।

विप्रतिपत्तिः (स्त्री०) = विरोध, √वि, प्रति-पद् + क्तिन् ।

जुहाव = हवन कर दिया, अर्पित कर दिया ।

गतस्पृहा = कामना न करनेवाले, इच्छा न रखनेवाले ।

## (२२) विदुलायाः वीर-वचनानि

न्यवोधयत् = समझाया; नि-√बुध् + णिच् + लङ् प्र० पु० ए० व० ।

अनन्दन = आनन्द न देनेवाला ।

संख्यापूरणमात्रम् = केवल संख्या पूर्ति करनेवाला ।

अभिभवति = नीचा दिखाता है, तिरस्कृत करता है; अभि-√भू + लट्-प्र० पु० ए० व० ।

निरमर्षः = क्रोध रहित ।

अमर्षी = क्रोधयुक्त ।

अक्षमी = क्षमा रहित ।

मृगयस्व = तलाश करो, √मृग चुरादि, लोट्, म० पु० ए० व० ।

विक्रान्तैः = पराक्रम के द्वारा; वि-√क्रम् + क्त (भावे) ।

अन्वर्थनामा = यथार्थ नाम-वाला ।

प्लवः (पु०) = नौका ।

भूतिकर्मसु = ऐश्वर्य के कामों में ।

अपागमत् = नष्ट हो गया ।

## (२३) दिलीपस्य नन्दिनी सेवा

अनपत्यतया = सन्तान न होने के कारण ।

प्रत्यावृत्य = लौटकर, √प्रति + आ + वृत् + क्त्वा (ल्यप्)

सान्ध्यं विधि = सन्ध्योपासना ।

सदारस्य = भार्या सहित ।

दारा = (स्त्री०) । दारशब्द सदैव पु० बहुवचन होता है ।

निपीड्य = दबाकर; नि-√पीड् + (चुरादि) क्त्वा (ल्यप्) ।

निषण्णाम् = बैठी हुई; नि + √सद् + क्त + टाप् ।

अद्रिशोभावलोकनपरः = पर्वत की शोभा को देखने में लगा हुआ; अद्रेः शोभा तस्य अवलोकनं तत्परः ।

आक्रन्दनम् (न०)–विलाप, आ–√क्रन्द् + ल्युट् ।

शरण्यः = शरणागतरक्षक, शरणे साधुः शरण्यः, शरण + यत् ।

निषङ्गात् (पु०) = तूणीर से । √नि–सञ्ज् + घञ् ।

उद्धर्तुम् = निकालने के लिए, उद् + √धृ + तुमुन् ।

आसादिता = पाई, प्राप्त ।

शमय = शान्त कर लो ।

विपन्नत्राणम् = दुखियों की रक्षा करना । √वि–पद + क्त, त्रै + ल्युट ।

यशोधनानाम् = यश एव धनं येषाम् तेषाम् ।

उद्भाव्य = प्रकट करके, पैदा करके ।

पत्रपुटे (न०) = दोनेमें ।

## (२४) राजस्थानम्

वीरप्रसविनी (स्त्री०) = वीरों को उत्पन्न करनेवाली ।

राजते = सुशोभित होती है, √राज् आत्मनेपदी, लट्, प्र० पु०, ए० व० ।

यशश्चन्द्रिका (स्त्री०) = कीर्ति-चन्द्रिका ।

भग्नावशेष (पु०) = खण्डहर ।

पूता = पवित्र, पू + क्त ।

स्फूर्ति (स्त्री०) = उत्साह । √स्फुर + क्तिन्

प्रयच्छति = प्रदान करती है; प्र–√दा–लट्, प्र० पु० ए० व० ।

निर्झर (पु०) = झरना, स्रोत ।

सेक्तुम् = सींचने के लिए; √सिच् + तुमुन् ।

केसरिणः = सिंह, केसर + इनि ।

अपहृते = छीन लेने पर, अप– √हृ + क्त ।

महिषी = पटरानी ।

अपकर्षति = हटता है, अप– √कृष् लट्, प्र० पु०, ए. व. ।

अन्यतः = दूसरी तरफ ।

बालुकामयः = बालुकाप्रचुर, जिसमें बालू मिट्टी अधिक है, बालुका + मयट् प्राचुर्येऽर्थे ।

ध्वंसाय (पु०) = नाश के लिए।
आराधिता = उपासना की, आ-√राध् + णिच् + क्त + टाप्।
अप्रतिहता = अव्याहत, बेरोक-टोक।
शोणितेन (न०) = रक्त से।
कुङ्कुमेन = केसर से।
अभिनवा = नूतन, नई।
प्राच्यम् (स्त्री०) = पूर्व दिशा में।
गालवाश्रम (पु०) गलता नामक तीर्थस्थान।
आवृता = अच्छादिता, घिरी हुई।
अजय्यम् = जो जीता नहीं जा नहीं जा सकता।
प्राकारैः (पु०) = परकोटों के द्वारा।
परिवृतम् = घिरा हुआ।
रञ्जयति = आनन्दित करता है।
अहौ = (पु०) सर्प, अहि शब्द का सप्तमी ए० व०।
कुसुमशयनं (न०) = पुष्पशय्या।
दृषदि (स्त्री०) = शिला, दृषत् का सप्तमी ए० व०।
स्त्रैणे (न०) = स्त्री-समूह।
विरमामः = शान्त होते हैं।

## (२५) नीतिश्लोकाः

सदयम् = दयायुक्त, दयालु।
भाषितम् = वचन, वाणी।
कायः (पु०) = शरीर।
जीवितम् (न०) = जीवन।
प्रतिक्रिया (स्त्री०) = प्रतीकार, उपाय।
कूपखननम् = कूपस्य खननम्, कुएँ का खोदना।
प्रदीप्ते = जलने पर।
अवृत्तिकम् = बिना आजीविका वाले।
सोपद्रवाम् = विघ्नयुक्त।
तिर्यञ्चः (पु०) = पशु-पक्षी।
अपन्थानम् = कुमार्ग को।
परिकीर्तिताः = बतलाए हैं, कथिताः।
मृदङ्गः = नगाड़ा।
उपानहा (स्त्री०) = जूते से।
वक्त्रम् (न०) = मुख व अग्र-भाग।
अतृणे = तृण रहित, यह नञ् तत्पुरुष समास है।

उपशाम्यति = शान्त हो जाती है।
भूरि = अधिक।
लक्षित = ज्ञात; दृष्ट।
सिद्धिः (स्त्री०) पूर्णता, सफलता।
विचक्षणः = बुद्धिमान्।
श्रुतवान् = शास्त्रज्ञ।
दर्शनीय = सुन्दर।
प्रकृतिसिद्ध = स्वभाव-सिद्ध।
न्याय्यात् = उचित, धर्मसंगत।
गुर्वी = बड़ी।
श्रुतेन (न०) = शास्त्र।
विधुरेऽपिकाले = आपत्तिकाल में भी।
पोतभङ्गे = जहाज के टूट जाने पर।
सायांत्रिकः (पु०) = व्यापारी।

## (२६) विश्वासघातस्य फलम्

वार्द्धकभावे = वृद्धावस्था में।
वित्तम् (न०) = धन।
शिल्प (न०) = कला।
प्रस्थितः = चल दिया; प्र-√स्था + क्त।
आसादितम् = प्राप्तम्, प्राप्त कर लिया।
गहने = दुर्गम, दुष्प्रवेश।
निक्षिप्य = रखकर, नि—क्षिप् क्त्वा (ल्यप्)।
सीदामः = दुखी होते हैं।
विवदमानौ = विवाद करते हुए।
प्रत्यूषे (पु०) = प्रातःकाल।
शुभ्रवसनः = श्वेत वस्त्र धारण किए हुए।
आकर्ण्य = सुनकर।
निग्रहम् (पु०) = दण्ड।
प्रतिलम्ब्य = लटकाकर, फाँसी देकर।
निकृत्या (स्त्री०) = दुष्टता से।

## (२७) परार्थं जीवितं सताम्

जीवितम् = (न०) जीवन।
सताम् = सज्जनों का, साधु पुरुषों का।
व्यापाद्यमान = मारा जाता हुआ।
उपेत्य = जाकर; उप–√इण् + क्त्वा (ल्यप्)।
स्फुटीकरोमि = जानामि, मालूम करूँ।
परिदेवितेन (न०) = विलाप, निषेधार्थक अलं का प्रयोग होने से यहाँ तृतीया विभक्ति आई है।
क्रोडीकरोति = (क्रोड-गोद) क्रोड + च्वि + कृ; गोद में लेती है।
धात्री (स्त्री०) = धाय, उपमाता।
प्रसक्तः = प्रचलित; लट्-सज्जति प्र–√सञ्ज् + क्त।
विटपान्तरितोभूत्वा = शाखा की आड़ में होकर; विटप शब्द पु० है। विटपेन अन्त-रितः–विटपान्तरितः।
अंशुक = वस्त्र।

आरोह = चढ़ जाओ; आ–√रुह् लोट्, म० पु० ए० व०।
समाश्वसिहि = धैर्य धारण करो; सम्–आङ्+श्वस् अदादि + लोट्, म० पु० ए० व०।
निष्कृप = निर्दय।
त्राये = रक्षा करूँ, √त्रै + लट्, उ० पु०, ए० व०।
संस्तम्भय = रोको, सम्–√स्तम्भ् (णिजन्त) लोट्।
ससंभ्रमम् = चौंक कर।
विनतानन्दन = विनतायाः नन्दन–विनता के पुत्र गरुड़।
बद्धकक्षाणाम् = बद्धपरिकर, कमर बाँधे हुए।
समुत्पस्यामहे = पैदा होवें, जन्म लें।
स्वाम्यादेशमनुतिष्ठामि = स्वामी की आज्ञा का पालन करता हूँ।

परिधत्ताम् = पहिनें, धारण करें; परि —√धा लोट् प्र० पु०, ए० व०

उज्झतः = छोड़ते हुए, उज्झ + शतृ–षष्ठी, एक० व० का रूप है।

उत्सङ्गे = गोद में। √उत्–सञ्ज् + घञ्।

## (२८) परैः सह विरोधे तुवयं पञ्चशतं ध्रुवम्

अभिद्रुत्य = आक्रमण करके; अभि-द्रु + क्त्वा (ल्यप्)।

जीवग्राहम् = जीवित ही। √जीव + ग्रह् + णमुल्।

समभिद्रुताः = आक्रान्ता, आक्रमण किए हुए; सम्-अभि-√द्रु + क्त, योधाः का विशेषण है।

अभ्ययुः = आये; अभि-√या + लङ्, प्र० पु०, बहु व०।

सन्नह्य = तैयार होकर, स-√नह् + क्त्वा (ल्यप्)।

शीतातपसहान् = सर्दी तथा गर्मी को सहन करनेवाले।

पराभवम् (पु०) = अपमान, विनाश; परा-√भू + अप्।

सुखावहः = सुखजनक, सुख पैदा करनेवाला; सुखं आवहति (जनयति)।

अपस्वरम् = क्रुद्ध।

परुषस्य (न०) = कठोरता का, निष्ठुर वचन का।

शरणैषिणः = शरण चाहनेवाले; द्वितीया बहु व० है, कौरवान् का विशेषण है।

विषमप्राप्तान् = कष्ट में पड़े हुए; आपत्ति में पड़े हुए।

ज्ञातीनाम् = सम्बन्धियों के; ज्ञातिन (पु०) का षष्ठी बहु व० है।

भेदा = विरोध।

मर्षयन्ति = सहन करते हैं।

अभिप्रधर्षणम् (न०) = तिरस्कार; अभि-प्र-√धृष् + ल्युट् (अन)।

प्रपन्न = शरणागत, प्र—(पद् + क्त)।

सज्जीभवत = तैयार होओ।

मोक्षणम् (न०) छुटकारा।

प्रतिजज्ञे = प्रतिज्ञा की, प्रति + √ज्ञा + लिट्।

## (२९) धैर्यं मतिर्धीयताम्

विरतवचनायां तस्याम् = उसके चुप हो जाने पर।

दैवायत्त = दैवाधीन, भाग्याधीन।

अवदातम् (न०) = शुद्ध, पवित्र, पुण्य।

अभियुक्तेन = विद्वान के द्वारा।

सपर्यासु (स्त्री०) पूजाओं में।

कौशिकप्रभावात् = कौशिकस्य प्रभावात्; विश्वामित्र के प्रभाव से।

अमोघफला = अवश्य फलप्रद, सफल।

अप्रतिविधेये = अप्रतिकार्य।

शोकानुबन्धः = शोकस्य अनुबन्धः, दुःखपरम्परा।

धर्मपराभिः = धर्म से युक्त; धर्मप्रधान।

आश्वास्य = आश्वासन देकर।

## (३०) महाराणा प्रतापः

दैवज्ञ (पु०) = ज्योतिषी।

प्रादुरभूत् = पैदा हुई।

भृशम् = बहुत अधिक।

प्रायतत = प्रयत्न किया।

अतिशेते = बढ़ जाता है, अतिक्रमण कर जाता है।

वैजयन्ती (स्त्री०) = पताका।

अद्वितीया = अनुपम।

अक्षया = अविनाशी।

प्रतापाग्रे = तेज के आगे।

प्राणानविगणय्य = प्राणों की परवाह न करके। प्राण शब्द सदैव पुल्लिंग तथा बहुवचन है।

क्षतिः (स्त्री०) = हानि।

निःशेषतां गतम् = समाप्त हो गए।

इतस्ततः = इधर-उधर।

पर्यङ्के (पु०) पलङ्ग पर।

बद्धपरिकरोऽभवत् = तैयार हो गया।

सैन्यसंघटनाय = सेना को संगठित करने के लिए।

अपेक्षा = आवश्यकता।

साधयेयम् = सिद्ध करूँ।

## (३१) शरद्वर्णनम्

तटाकानि (न०) = तालाब, सरोवर।

तोयधराः, (पु०)=मेघाः, बादल।

सप्तच्छदपादपानाम् = सप्तपर्ण वृक्षों की।

अर्क (पु०) सूर्य।

उत्तम-वारणानाम् = श्रेष्ठ हाथियों की।

श्रियं (स्त्री०) = शोभा, लक्ष्मी।

मदप्रगल्भेषु = मदोन्मत्त।

निम्नगासु = नदियों में, निम्नं गच्छति इति निम्नगाः, जो नीचे की ओर जाती है।

चारुविशालपक्षैः = सुन्दर तथा बड़े-बड़े पंख हैं जिनके (चक्रवाकैः का विशेषण है)।

पुलिन (न०) = नदी का बालुकामय तट-प्रदेश।

अवकीर्ण = फैलाई हुई, विक्षिप्त।

व्यपेतपङ्कासु = पंक-रहित; यह तथा आगे के सप्तमी बहुवचनवाले सभी शब्द नदीषु के विशेषण हैं।

प्रसन्नतोयासु = निर्मल जलवाली।

आराव (पु०) शब्द।

अम्बुधरेषु = मेघों में।

चिरोषिता = बहुत समय से रहते हुए।

व्यभ्रम् = मेघ-रहित।

कल्हार = श्वेत कमल।

कुसुमप्रहासैः = पुष्प-रूपी हास्य।

व्याधूयमान=हिलाए जाते हुए।

अमल = निर्मल।

क्षौमपट = रेशमी वस्त्र।

प्रसन्नम् = निर्मल, स्वच्छ।

प्रहासम् = विकसित।

शंसन्ति = कहते हैं, बतला रहे हैं।

वर्षाव्यपनीतकालम् = वर्षा-रहित समय को।

क्रौञ्चस्वनः = क्रौञ्च पक्षियों का शब्द।

## सूक्तयः

प्रवाते = आँधी में, झंझावात में।
द्रुमायते = पेड़ गिना जाता है।
निरस्तपादपे = वृक्ष-रहित।
परप्रत्ययनेयबुद्धिः = दूसरे की प्रेरणा से चलनेवाला।
बहुलीभवन्ति = बढ़ जाते हैं। अबहुला बहुलाः संपद्यमाना भवन्ति। यह च्वि-प्रत्ययान्त है।
ध्रुवः = सुनिश्चित।
आर्जवम् = सीधापन, सरलता।
समुच्छ्रयाः = अति उन्नति, बहुत ऊँचा होना।
कुटुम्बकम् = परिवार; यहाँ स्वार्थ कन् प्रत्यय है।
महताम् = महान् व्यक्तियों का।
उपकरणैः = साधनों द्वारा।
वयः = उम्र, आयु।
मोघा = निष्फल।
कृष्णायते करम् = हाथ को काला कर देता है; यह सूक्ति दुर्जन के लिए कही गई है।
प्रोज्झितुम् = प्र—√उज्झ (तुदादि, परस्मैपदी लट् उज्झति) + तुमुन्—मेटने को, हटाने को।